जिनमताय प्रणामः—

अवमसन्तमसं ततमानयत्
प्रलयमालयमागमरोचिषाम् ।
भुवनपावनपालनमर्कवज्-
जिनमतं नम तन्नयवन्नहो ! ॥ ३ ॥–द्रुत०

मानवीदेव्याः स्तुतिः—

जयति सायतिसामकृदन्विता
सुतरुणा तरुणाब्जसमद्युतिः ।
कजगता जगता समुदा नुता
नतिमताऽतिमता भुवि 'मानवी' ॥ ४ ॥ ९ ॥–द्रुत०

* * * *

## १० श्रीशीतलजिनस्तुतयः

अथ श्रीशीतलनाथस्य स्तुतिः—

विहरति भुवि यस्मिन् देवलोकोपमानः
समजनि नरलोकः 'शीतलो'ऽकोपमानः ।
ऋजिमसलिलधाराधौतमायापरागः
स भवतु भवभीतेः संशमायापरागः ॥ १ ॥
–मालिनी (८, ७)

जिनवराणामुपासना—

यमभिनवितुमुच्चैर्दिव्यराजीववार-
स्थितचरणसरोजं भव्यराजी ववार ।
जिनवरविसरं तं पापविध्वंसदक्षं
शरणमित विदन्तो मा स्म विद्ध्वं सदक्षम् ॥ २ ॥–मालिनी

सिद्धान्तस्य स्तुतिः—

पटुररितिमिरौघव्याहतावर्यमेव
प्रवितरति जनेभ्यो यः सदा वर्यमेव ।

स हि बहुविधजन्मव्रातजैनःकृतान्तः
कृतकुमतविघातः पातु जैनः कृतान्तः ॥ ३ ॥—मालिनी

पुरुषदत्तादेव्याः स्तुतिः—

भ्रमति भुवि महिष्या याऽमहासिन्धु नाना-
कृतजिनगृहमालासन्महाऽसिं धुनाना ।
कनकनिभवपुःश्रीरञ्जसा साधिताया
रुजतु 'पुरुषदत्ता'ऽस्मासु सा साधितायाः ॥४॥१०॥—मालिनी

✻　✻　✻　✻

## ११ श्रीश्रेयांसजिनस्तुतयः

अथ श्रीश्रेयांसनाथाय वन्दनम्—

विमलितबहुतमसमलं
स्फुरत्प्रभामण्डलास्तसन्तमसमलम् ।
सकलश्रीश्रेयांसं
प्रणमत भक्त्या जिनेश्वरं 'श्रेयांसम्' ॥ १ ॥
—आर्यागीतिः (स्कन्धकम्)

जिनपतिभ्यः प्रणामः—

आनन्दितभव्यजनं
घनाघघर्मार्तशिशिरशुभव्यजनम् ।
अभिवन्दे जिनदेव-
क्रमयुगलं सद्गुणैः सदाऽजिनदेव ॥ २ ॥—आर्या०

जिनवाण्यै नमः—

जैनमुपमानरहितं
वचो जगत्त्राणकारि नो पुनरहितम् ।
प्रणमत सन्महिमकरं
भव्यमहाकुमुदबोधजन्महिमकरम् ॥ ३ ॥—आर्या०

महाकालीदेव्याः स्तुतिः—

या द्युतिविजिततमाला
पविफलघण्टाक्षभृल्लसत्ततमाला ।
नृस्था सुषमं तनुता-
दसौ 'महाकाल्य'मर्त्यसामन्तनुता ॥ ४ ॥ ११ ॥—आर्या०

✻ ✻ ✻ ✻

## १२ श्रीवासुपूज्यजिनस्तुतयः

अथ श्रीवासुपूज्यस्य महिमा—

श्रीमते 'वासुपूज्याय', ज्यायसे जगतां नमन् ।
न मन्दोऽपि क्षणादेव, देवपूज्यो न जायते? ॥ १ ॥
—अनुष्टुब्

तीर्थङ्कराणामभ्यर्थना—

ये स्नापिताः सुरुचितै–रुचितैर्दानवारिभिः ।
वारिभिर्वितते मेरौ, ते मे रौद्रं हरन्त्वघम् ॥ २ ॥—अनुष्टुब्

जिनवाणीविचारः—

अनादिनिधनाऽदीना, धनादीनामतिप्रदा ।
मतिप्रदानमादेया–ऽनमा देयाज्जिनेन्द्रवाक् ॥ ३ ॥—अनुष्टुब्

गौरीदेव्याः स्तुतिः—

सौवर्णपट्टा श्रीगौरी, श्री'गौरी' पद्महस्तिका ।
हस्तिकाया महागोधा–ऽऽगोधामध्वस्तयेऽस्तु वः ॥ ४ ॥ १२ ॥—अनुष्टुब्

✻ ✻ ✻ ✻

## १३ श्रीविमलजिनस्तुतयः

अथ श्रीविमलनाथस्य संस्तवनम्—

निजमहिमविजितकमलं
प्रमदभरानम्रदेवपूजितकमलम् ।

विमलस्य धामयुगलं-
घनीयगुणसम्पदभिनुत क्रमयुगलम् ॥ १ ॥
—आर्यागीतिः

जिनसेवा—

शमिताखिलरुजि नाना-
म्भोजोदरलालितेऽतिचारु जिनानाम् ।
चरणयुगे दिविजनते
भक्तिं कुरु दुर्लभे भुवि जनते! ॥ २ ॥—आर्या०

जिनवाणीस्तुतिः—

विजितवती सुरवं द्या-
मापूरितवन्तमम्बुदं सुरवन्द्या ।
वीरस्य भवादवताद्
वाणी केनापि न विजिता वादवता ॥ ३ ॥ —आर्या०

गान्धारीदेव्याः स्तुतिः—

पविमुशलकरा लाभं
शुभं क्रियादधिवसन्त्यतिकरालाभम् ।
कमलं रागान्धारी-
रणकृन्नीलप्रभोत्करा 'गान्धारी' ॥ ४ ॥ १३ ॥—आर्या०

## १४ श्रीअनन्तजिनस्तुतयः

अथ श्रीअनन्तनाथस्य स्तुतिः—

निरेति गदवल्लरीगुपिलजन्मकान्तारतः
प्रणम्य यमनीप्सितोपनतदिव्यकान्तारतः ।
अनन्तजिदसौ जयत्यभिमतायदो घस्मरः
समस्तजगदंहसां हतकृतापदोघस्मरः ॥ १ ॥
—पृथ्वी(८,९)

जिनानां विजयः—

भवन्ति न यदानता वरविधावलीकानना:
श्रुतज्वलनभस्मसात्कृतभवावलीकानना: ।
प्रपश्चितजगद्धृहद्दुरितकूपतारा जिना
जयन्ति वपुषेह तेऽनुपमरूपताराजिना ॥ २ ॥–पृथ्वी

जिनवाण्याः प्राधान्यम्—

अवन्त्यखिलविष्टपाश्रितसभाजनासूनृता
जयत्यमरयोगिभिः कृतसभाजना सूनृता ।
जिनेन्द्रगदिता नयादिवसुपाऽत्र गीर्बाणता-
मिता रिपुविभेदने कृतसुपात्रगीर्वाणता ॥ ३ ॥–पृथ्वी

मानसीदेव्याः स्तुतिः—

निजाङ्गलतयोज्वला विशदबन्धुजीवाभया
सिताङ्गविहगा हतानमदबन्धुजीवाऽभया ।
ज्वलज्ज्वलनहेतिका हरतु 'मानसी' तापदं
शुभातिशयधान्यवृद्ध्यनुपमानसीता पदम् ॥४॥१४॥–पृथ्वी

* * * *

## १५ श्रीधर्मजिनस्तुतयः

अथ श्रीधर्मनाथस्य स्तुतिः—

समवसरणभूमौ सज्जिताचौंदयायां
नियतमभिदधौ यः सज्जिताचौं दयायाम् ।
जनयतु मुदमुद्यद्रागसौधर्मनामा-
र्चितहरिपरिपूज्यो द्रागसौ 'धर्म'नामा ॥ १ ॥
—मालिनी ( ८, ७ )

जिनवराणां विज्ञप्तिः—

यदुदयमधिगम्य व्यापदानन्दमश्र-
ज्जगदुपरतहिंसं व्याप दानं दमं च ।

ददतु पदमुरुश्रीतेजि नानाशयं तु
प्रतिभयमिह नोऽघं ते जिना नाशयन्तु ॥ २ ॥—मालिनी

जिनवचनप्रशंसा—

परसमयरिपूणां संसदो दारहेतौ
विहितविततमोहासं सदोदारहेतौ।
जिनवचसि रता स्तापच्छतौ सत्यनीतौ
दिविजमनुजलक्ष्मीपद्धतौ सत्यनीतौ ॥ ३ ॥—मालिनी

महामानसीदेव्याः स्तुतिः—

असिफलकमणिश्रीकुण्डिकाहस्तिकाऽलं
प्रबलरिपुवनानां कुण्डिका हस्तिकालम्।
मृगपतिमधिरूढा सा 'महामानसी' मा-
मवतु सुतडिदाभाऽसामहा मानसीमा ॥ ४ ॥ १५ ॥—मालिनी

※ ※ ※ ※

## १६ श्रीशान्तिजिनस्तुतयः

अथ श्रीशान्तिनाथाय नमः—

भव्यैः कथञ्चिदतिदुःखगभीरवापे-
रुत्तारको जगति सम्यगभीरवापे।
यस्तं नमामि विहितावमहानिशान्तं
'शान्तिं' जिनं परमशान्तिमहानिशान्तम् ॥ १ ॥
—वसन्ततिलका

जिनानामुत्कर्षः—

यद्वाहवो वरपुरीपरमार्गलाभाः
प्राप्ता यतश्च जगता परमार्गलाभाः।
नत्वा च यांस्तुलितवैबुधराजि नाऽऽस्ते
सिद्धौ जयन्त्यघदवाम्बुधरा जिनास्ते ॥ २ ॥—वसन्त०

जैनवचसः प्रधानता—

यच्छृण्वतोऽत्र जगतोऽपि समाऽधिकाऽरं
बुद्धिर्भवत्यनुपतापि समाधिकारम्।
तत् पावकं जयति जैनवचो रसादि-
भोगातिलोलकरणानवचोरसादि ॥ ३ ॥—वसन्त०

कालीदेव्याः प्रार्थना—

धत्ते गदाक्षमिह दृक्पतिताञ्जनस्य
कान्तिं च या गतवती पतितां जनस्य।
आमोदलोलमुखरोपरिपातुकाली
पद्मो यदासनमसौ परिपातु 'काली' ॥ ४ ॥ १६ ॥—वसन्त०

१७ श्रीकुन्थुजिनस्तुतयः

अथ श्रीकुन्थुनाथस्य स्तुतिः—

हन्तुं महामोहतमोऽक्षमाणा-
मोजो नृणां योऽकृत मोक्षमाणा।
यं चातिकृच्छ्राज्जनताऽऽप देवः
स्थाप्यात् स 'कुन्थुः' शिवतापदे वः ॥ १ ॥

—इन्द्रवज्रा

जिनदर्शनस्य प्रभावः—

संसाररूपः सुबृहन्नुदन्वा-
नलङ्घि पीडानिवहं नुदन् वा।
यद्दर्शनात् प्रापि जनेन नाकः
स्तूयाज्जिनांस्तान् भुवने न ना कः? ॥ २ ॥—उपजातिः

जिनवाणीमाहात्म्यम्—

वज्राशनीं दुष्कृतपर्वतानां
निर्वाणदानात् कृतपर्वतानाम्।

जिनेन्द्रवाणीमवदातनिष्ठां
समाश्रयध्वं स्ववदातनिष्ठाम् ॥ ३ ॥–उप०

महाकालीदेव्याः स्तुतिः—

घण्टेन्द्रशस्त्रं सफलाक्षमालं
नृस्था वहन्ती विमला क्षमाऽलम् ।
वरेषु वः पातु तमालकान्ता
देवी 'महाकाल्य'समालकान्ता ॥ ४ ॥ १७ ॥–उप०

ॐ ॐ ॐ ॐ

## १८ श्रीअरजिनस्तुतयः

अथ श्रीअरनाथस्य स्तुतिः—

स्तुत तं येन निर्वृत्या–मरञ्जि नवरञ्जनाः ।
विहाय लक्ष्मीर्जगता–'मरं' जिनवरं जनाः! ॥ १ ॥
–अनुष्टुप्

जिनकदम्बकस्य स्तुतिः—

त्रिलोकीं फलयन् पातु, सज्जनःपादपो स वः ।
जिनौघो यस्य वन्द्याः श्री–सज्जनः पादपांसवः ॥ २ ॥–अनुष्टुप्

जिनवाक्स्तुतिः—

जैन्यव्याद् वाक् सतां दत्त–माननन्दा न वादिभिः ।
जय्या स्तुता च नीतीना–माननं दानवादिभिः ॥३॥–अनुष्टुप्

वैरोट्यादेव्याः स्तुतिः—

श्यामा नागास्त्रपत्रा वो, 'वैरोट्या'ऽरं भयेऽवतु ।
शान्तोऽरातिर्यथाऽत्युग्र–वैरोऽव्यारम्भयेव तु ॥ ४ ॥१८॥–अनुष्टुप्

ॐ ॐ ॐ ॐ

## १९ श्रीमल्लिजिनस्तुतयः

अथ श्रीमल्लिनाथस्य स्तुतिः—

करोतु नो 'मल्लि'जिनः, प्रियं गुरु चिरं हतिम् ।
द्विषां च तन्यात् सिद्धेश्च, प्रियङ्गुरुचिरंहतिम् ॥ १ ॥

—अनुष्टुप्

जिनजन्ममहिमा—

जैनं जन्म श्रियं स्वर्ग-समग्रामं दधातु नः ।
क्षणदं मेरुशिरसः, समग्रामन्दधातुनः ॥ २ ॥—अनुष्टुप्

जिनवाण्याः स्वीकारः—

जिनस्य भारतीं तमो-वनागसङ्गनाशनीम् ।
उपेत हेतुमुन्नता-वनागसं घनाशनीम् ॥ ३ ॥—प्रमाणिका

श्रुतदेवतायाः स्तुतिः—

वाग्देवी वरदीभूत-पुस्तिकाऽऽपद्मलक्षितौ ।
आपोऽव्याद् बिभ्रती हस्तौ, पुस्तिकापद्मलक्षितौ ।४।१९—अनुष्टुप्

* * * *

## २० श्रीमुनिसुव्रतजिनस्तुतयः

श्रीमुनिसुव्रतनाथस्य स्तुतिः—

जयसि 'सुव्रत!' भव्यशिखण्डिना-
मरहितापघनाञ्जननीलताम् ।
दधदलं फलयंश्च समं भुवा-
ऽमरहितापघनां जननीलताम् ॥ १ ॥

—द्रुतविलम्बितम्

समग्रजिनवराणां स्तुतिः—

प्रतिजिनं क्रमवारिरुहाणि नः
सुखचितानि हितानि नवानि शम् ।

दधति रान्तु पदानि नखप्रभा-
सुखचितानि हि तानि नवानिशम् ॥ २ ॥—द्रुत०

जिनमतप्रशंसा—

जयति तत् समुदायमयं हशा-
मतिकवी रमते परमे धने ।
महति यत्र विशालबलप्रभा-
मतिकवीरसते परसेधने ॥ ३ ॥—द्रुत०

श्रुतदेवतायाः स्तुतिः—

श्रुतनिधीशिनि! बुद्धिवनावली-
दवमनुत्तमसारचिता पदम् ।
भवभियां मम देवि! हरादरा-
दवमनुत् तमसा रचितापदम् ॥ ४ ॥ २० ॥—द्रुत०

* * * *

## २१ श्रीनमिजिनस्तुतयः

अथ श्रीनमिनाथस्य स्तुतिः—

विपदां शमनं शरणं
यामि 'नमिं' दूयमानमनुजनतम् ।
सुखकुमुदौघविकाशे
यामिनमिन्दूयमानमनुजनतम् ॥ १ ॥
—गीतिः

जिनेश्वराणां प्रार्थना—

यैर्भव्यजनं त्रातुं
येते भवतोऽजिनास्थिरहिता ये ।
ईशा निदधतु सुस्था-
ये ते भवतो जिना स्थिरहिताये ॥ २ ॥ —गीतिः

जिनशासनस्य विजयः—

जिनशासनं विजयते
विशद्प्रतिभानवप्रभङ्गमवत् ।
त्रिजगद् भवकान्तारं
विशद्प्रतिभानवप्रभं गमवत् ॥ ३ ॥–गीतिः

अच्छुप्तादेव्याः स्तुतिः—

सा'ऽच्छुप्ता'ऽव्याद् गौरी-
ह वाजिना याति या नमस्यन्ती ।
द्वैषमसिकार्मुकजिता-
ऽऽहवा जिनायातियानमस्यन्ती ॥ ४ ॥ २१ ॥–गीतिः

* * * *

## २२ श्रीनेमिजिनस्तुतयः

अथ श्रीनेमिनाथायाभ्यर्थना—

चिरपरिचितलक्ष्मीं प्रोज्झ्य सिद्धौ रतारा-
द्मरसदृशमर्त्यावर्जितां देहि 'नेमे!' ।
भवजलधिनिमज्जज्जन्तुनिर्व्याजबन्धो !
द्मरसदृशमर्त्या वर्जितां देहिने मे ॥ १ ॥
—मालिनी

जिनवराणां स्तुतिः—

विदधदिह यदाज्ञां निर्वृतौ शंमणीनां
सुखनिरतनुतानोऽनुत्तमास्तेऽमहान्तः ।
ददतु विपुलभद्रां द्राग् जिनेन्द्राः श्रियं स्वः-
सुखनिरतनुता नोऽनुत्तमास्ते महान्तः ॥ २ ॥ —मालिनी

जिनसिद्धान्तस्मरणम्—

कृतसुमतिबलर्द्धिध्वस्तरुग्मृत्युदोषं
परममृतसमानं मानसं पातकान्तम् ।

प्रति दृढरुचि कृत्वा शासनं जैनचन्द्रं
　परममृतसमानं मानसं पात कान्तम् ॥ ३ ॥—मालिनी

अम्बादेव्याः स्तुतिः—

जिनवचसि कृतास्था संश्रिता कम्रमाम्रं
　समुदितसुमनस्कं दिव्यसौदामनीरुक् ।
दिशतु सतत'मम्बा' भूतिपुष्पात्मकं नः
　समुदितसुमनस्कं दिव्यसौ दाम नीरुक् ॥४॥२२॥—मालिनी

* * * *

## २३ श्रीपार्श्वजिनस्तुतयः

अथ श्रीपार्श्वनाथाय प्रणामः—

नमामि जिन'पार्श्व'! ते शमितविग्रहं विग्रहं
　महानिधनमेरुके वरद! शान्त! कृत्स्नापितम् ।
शुभैस्त्रिभुवनश्रियाः सुरवरैरनीचैस्तरा-
　महानिधनमेरुकेऽवरदशान्तकृत्! स्नापितम् ॥ १ ॥
—पृथ्वी

जिनपतिभ्यः प्रार्थना—

सुखौघजलमण्डपां दुरितघर्मभृद्भ्यो हितां
　शुभव्यजनकामिताङ्कुशलसत्पताकारिणः ।
जिनेन्द्रचरणेन्दवः प्रवितरन्तु लक्ष्मीं सदाऽऽ-
　शु भव्यजनकामितां कुशलसत्पताकारिणः ॥ २ ॥—पृथ्वी

जिनमतस्वरूपम्—

अशक्यनुतिकं हरेरपि भवाद्रिनिर्दारणे
　स्वरूपममलङ्घनं मनसि किन्नरैरञ्चितम् ।
नयैर्जिनपतेर्मतं जन! शिवस्पृहश्चेदिति-
　स्वरूपममलं घनं मनसि किं न रैरं चितम्? ॥ ३ ॥—पृथ्वी

यक्षराजस्य स्तुतिः—

जिनार्चनरतः श्रितो मदकलं न तुल्यस्यदं
द्विपं न मनसा धने रतिसमानयक्षीजनः ।
जयत्यखिलयक्षराट् प्रथितकीर्तिरत्युन्नमद्-
विपन्नमनसाधनैरतिसमानयक्षीजनः ॥ ४ ॥ २३ ॥–पृथ्वी

* * * *

## २४ श्रीवीरजिनस्तुतयः

अथ श्रीवीरनाथस्य स्तुतिः—

न त्वा नत्वाऽपवर्गप्रगुणगुरुगुणव्रातमुद्भूतमुद् भू-
रंहोरंहोभवानां भवति घनभयाभोगदानां गदानाम् ।
नन्ताऽनन्ताङ्गमेवं वदति यमनघं भासुराणां सुराणां
पाता पातात् स 'वीरः' कृतततमलिनज्ञानितान्तं नितान्तम् ॥ १ ॥
–स्रग्धरा ( ७, ७, ७ )

जिनेश्वराणां स्तुतिः—

येऽमेये मेरुमूर्धन्यतुलफलविधासक्तरूपात्तरूपाः
सस्नुः सस्नुत्यजीर्यद्दृषदि सुरजलैः प्रास्तमोहास्तमोहाः ।
जातौ जातौजसस्ते द्युतिचितिजितसत्कुन्ददन्ता ददन्ता-
मध्यामध्यानगम्याः प्रशममिह जिनाः पापदानां पदानाम् ॥२॥–स्रग्०

जिनवचनविचारः—

दोषो दोषोरुसिन्धुप्रतरणविधिषु न्यायशस्या यशस्याः
प्रादुः प्रादुष्कृतार्थाः कृतनतिषु जयं सम्पराये परा ये ।
ते शान्तेशां नखांशुच्छुरितसुरशिरोराजिनानाजिनाना-
मारामा राद्धिलक्ष्म्या वचनविधिलवा वो दिशन्तां दिशं ताम् ॥३॥
–स्रग्०

अम्बादेव्याः स्तुतिः—

सिंहेऽसिं हेलयाऽलं जयति खरनखैर्वीतनिष्ठेऽतनिष्ठे
शुक्ले शुक्लेशनाशं दिशति शुभकृतौ पण्डितेऽखण्डिते खम् ।
याते या तेजसाऽऽढ्या तडिदिव जलदे भाति धीराऽतिधीरा-
पत्याऽऽपत्यापनीयान्मुदितसमपराद्धर्याधमं बाध'मम्बा' ॥४॥२४

—स्रग्०

॥ इति चतुर्विंशतिका समाप्ता ॥







॥ श्रीबप्पभट्टिसूरिविरचिता ॥

# ॥ चतुर्विंशतिका ॥

## ( सटीका )



### १ श्रीऋषभजिनस्तुतयः

अथ श्रीनाभेयस्य स्तुतिः—

नम्रेन्द्रमौलिगलितोत्तमपारिजात-
मालार्चितक्रम ! भवन्तमपारिजात ! ।
'नाभेय' ! नौमि भुवनत्रिकपापवर्ग-
दायिन् ! जिनास्तमदनादिकपापवर्ग ! ॥ १ ॥

—वसन्ततिलका ( ८, ६ )

#### टीका

पारिजाताः-कल्पद्रुमास्तेषां मालास्ताभिरर्चितौ क्रमौ यस्य तस्य संबोधनं हे पा० । अपगतमरिजातं यस्य तस्यामन्त्रणे । भुवनत्रिकं पातीति "क्वचित् डः" (सिद्ध-हेमे० अ० ५, पा० १, सू० १७१ ) "डित्यन्त्यस्वरादेः" ( सिद्ध० अ० २, पा० १, सू० ११४ ) इत्यनेनान्त्यस्य लोपः तस्यामन्त्रणम् । हे मोक्षदायिन् ! अस्तः कन्दर्पादिकः पापवर्गो येन तस्यामन्त्रणे ॥ १ ॥

#### अन्वयः

नम्र-इन्द्र-मौलि-गलित-उत्तम-पारिजात-माला-अर्चित-क्रम ! अप-अरि-जात ! भुवन-त्रिक-प ! अपवर्ग-दायिन् ! जिन ! अस्त-मदन-आदिक-पाप-वर्ग ! 'नाभेय' ! भवन्तं नौमि ।

## શબ્દાર્થ

नम्र=નમસ્કાર કરનારા.
इन्द्र=સુરપતિ, ઇન્દ્ર.
मौलि=(૧) મસ્તક; (૨) મુકુટ.
गलित ( ધા૦ गल् )=પડેલી.
उत्तम=શ્રેષ્ઠ.
पारिजात=પારિજાતક, કલ્પવૃક્ષ.
माला=માળા.
अर्चित ( ધા૦ अर्च् )=પૂજાયેલાં.
क्रम=ચરણ.
नम्रेन्द्रमौलिगलितोत्तमपारिजातमालार्चितक्रम !=હે નમસ્કાર કરનારા ઇન્દ્રોના મસ્તક (અથવા મુકુટ) ઉપરથી પડેલી શ્રેષ્ઠ પારિજાતકની માલાઓ વડે પૂજાયેલાં છે ચરણો જેનાં એવા ! ( સં૦ )
भवन्तं ( મૂ૦ भवत् )=તમને, આપ સાહેબને.
अप=દૂરવાચક અવ્યય.
अरि=શત્રુ, દુશ્મન.
जात=સમૂહ.
अपारिजात !=દૂર થયો છે શત્રુ-સમૂહ જેનો એવા ! ( સં૦ )
नाभेय ! ( મૂ૦ नाभेय )=હે નાભિ (નરેશ)ના નન્દન, હે ઋષભદેવ !
नौमि ( ધા૦ नु )=હું સ્તવું છું.
भुवन=લોક, જગત્.
त्रिक=ત્રણનો સમુદાય.
पा=રક્ષણ કરવું.
भुवनत्रिकप !=હે ત્રૈલોક્યના રક્ષક !
अपवर्ग=મોક્ષ, નિર્વાણ.
दा=આપવું.
अपवर्गदायिन् !=હે મોક્ષના દાતાર !
जिन ! ( મૂ૦ जिन )=હે વીતરાગ, હે જિનેશ્વર !
अस्त ( ધા૦ अस् )=ફેંકી દીધેલ, પરાસ્ત કરેલ.
मदन=મદન, કામદેવ.
आदि=શરૂઆત.
पाप=પાપ.
वर्ग=સમુદાય.
अस्तमदनादिकपापवर्ग !=પરાસ્ત કર્યો છે કામદેવાદિક પાપ-સમુદાયને જેણે એવા ! ( સં૦ )

## શ્લોકાર્થ

**શ્રીનાભિનન્દનની સ્તુતિ—**

" નમસ્કાર કરનારા [1]ઇન્દ્રોના મસ્તક ( અથવા મુકુટ ) ઉપરથી પડેલી એવી ઉત્તમ પારિજાતક (નામનાં પુષ્પો)ની માલાઓ વડે પૂજાયેલાં છે ચરણો જેનાં એવા હે (નાથ) ! નષ્ટ થયો છે શત્રુ-સમૂહ જેનો એવા હે ( ઈશ ) ! હે ( સ્વર્ગ, મર્ત્ય અને પાતાળરૂપી અથવા અધો-લોક, તિર્યગ્-લોક અને ઊર્ધ્વ-લોકરૂપી ) ત્રણ ભુવનના પાલક ! હે મોક્ષના દાતાર ! હે વીતરાગ ! પરાસ્ત કર્યો છે [2]કામદેવાદિક પાપ-સમુદાયને જેણે એવા હે (પરમેશ્વર) ! હે [3]નાભિ( નરેશ )ના નન્દન ( અર્થાત્ [4]ઋષભદેવ ) ! હું આપને સ્તવું છું."—૧

## સ્પષ્ટીકરણ

**પદ્ય-મીમાંસા—**

છન્દઃશાસ્ત્રમાં 'પદ્ય' શબ્દથી ચાર 'પદ' યાને 'ચરણ'વાળો છન્દ સમજવામાં આવે છે. આ પદ્યના વર્ણ અને માત્રાના ભેદને ધ્યાનમાં લઇને વૃત્ત અને જાતિ એમ બે પ્રકારો પાડેલા

---

૧ જૈન શાસ્ત્રમાં સૌધર્મપ્રમુખ ૬૪ ઇન્દ્રો માનવામાં આવ્યા છે. આની માહિતી સારૂ જુઓ શ્રીશોભનમુનીશ્વરકૃત સ્તુતિ-ચતુર્વિંશતિકા ( પૃ૦ ૩૧ ).

૨ કામદેવના સ્વરૂપ સારૂ જુઓ ઉપર્યુક્ત સ્તુતિ-ચતુર્વિંશતિકા ( પૃ૦ ૨૪-૨૫ ).

૩-૪ નાભિ નરેશ અને તેમના પુત્ર શ્રીઋષભદેવ ઉપર સ્તુતિ-ચતુર્વિંશતિકાનું વિવેચન ( પૃ૦ ૮, ૯ ) પ્રકાશ પાડે છે.

છે. અર્થાત્ જે પદ્યનાં ચરણો 'વર્ણ'ના નિયમને અનુસરીને રચાયાં હોય, તેને 'વૃત્ત' કહેવામાં આવે છે, જ્યારે જેનાં ચરણો 'માત્રા'ને ધ્યાનમાં લઇને રચવામાં આવ્યાં હોય, તેને 'જાતિ' કહેવામાં આવે છે. આ વાતના ઉપર નીચેનો શ્લોક પ્રકાશ પાડે છેઃ—

"पद्यं चतुष्पदैः प्रोक्तं, तद् द्विधा परिकीर्तितम् ।
मात्रया जायते जाति-र्वर्णतो वृत्तसंज्ञकम् ॥" —અનુષ્ટુભ્.

વિશેષમાં વૃત્તના ત્રણ પ્રકારો છે-(૧) સમવૃત્ત, (૨) અર્ધસમવૃત્ત અને (૩) વિષમવૃત્ત. તેમાં 'સમવૃત્ત'નું લક્ષણ એ છે કે—

"अङ्घ्र्यो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः, 'समवृत्तं' प्रचक्षते ॥"

—વૃત્તરત્નાકર, શ્લોકાંક ૧૪.

અર્થાત્ જે વૃત્તનાં ચારે ચરણો સમાન લક્ષણવાળાં હોય (અર્થાત્ જેનાં ચારે ચરણોને એકજ નિયમ લાગૂ પડતો હોય), તેને છન્દઃશાસ્ત્રના જાણકારો 'સમવૃત્ત' કહે છે.

'અર્ધસમવૃત્ત'નું લક્ષણ નીચે મુજબ છેઃ—

"प्रथमाङ्घ्रिसमो यस्य, तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद् वृत्तं, त'दर्धसम'मुच्यते ॥"

—વૃત્ત૦ શ્લો૦ ૧૫.

એટલે કે જે વૃત્તનાં પ્રથમ અને તૃતીય ચરણો સમાન હોય તેમજ દ્વિતીય અને ચતુર્થ ચરણો પણ સમાન લક્ષણથી લક્ષિત હોય, તે વૃત્ત 'અર્ધસમવૃત્ત' કહેવાય છે.

'વિષમવૃત્ત'ના સંબંધમાં સમજવું કે—

"यस्य पादचतुष्केऽपि, लक्ष्म भिन्नं परस्परम् ।
तदाहु'र्विषमं' वृत्तं, छन्दःशास्त्रविशारदाः ॥"

—વૃત્ત૦ શ્લો૦ ૧૬.

અર્થાત્ જેનાં ચારે ચરણોનાં લક્ષણો એક બીજાથી ભિન્ન હોય, તે વૃત્તને છન્દઃશાસ્ત્રમાં પ્રવીણ પુરૂષો 'વિષમવૃત્ત' કહે છે.

હવે પ્રથમ તો આપણે આ કાવ્યનું પ્રાથમિક પદ્ય 'વૃત્ત' છે કે 'જાતિ' છે તેનો નિર્ણય કરવો જોઇએ અને તે માટે 'વર્ણ' અને 'માત્રા' પરત્વે વિચાર કરવો જોઇએ. તેમાં વર્ણના હ્રસ્વ અને દીર્ઘ એમ બે પ્રકારો છે. (હ્રસ્વ વર્ણની એક માત્રા અને ગુરૂ વર્ણની બે માત્રા ગણવામાં આવે છે.) વિશેષમાં અ, ઇ, ઉ, ઋ અને લૃ એ હ્રસ્વ અક્ષરો યાને વર્ણો છે, જ્યારે બાકીના આ, ઈ, ઊ, ૠ, એ, ઐ, ઓ અને ઔ એ સ્વરોને દીર્ઘ વર્ણો કહેવામાં આવે છે. આ ઉપરાંત હ્રસ્વ સ્વર પછી જોડાક્ષર કે અનુસ્વાર કે વિસર્ગ હોય, તો તે દીર્ઘ ગણાય છે. વળી પાદને અન્તે જો હ્રસ્વ સ્વર હોય તો તેને વિકલ્પે દીર્ઘ ગણવામાં આવે છે. આ વાતની નિમ્ન-લિખિત શ્લોક પણ સાક્ષી પૂરે છે.

"सानुस्वारो विसर्गान्तो, दीर्घो युक्तपरश्च सः ।
वा पादान्ते त्वसौ ग्वक्रो, ज्ञेयोऽन्यो मात्रिको लघुः ॥"

—વૃત્ત૦ શ્લો૦ ૯.

અર્થાત્ અનુસ્વાર સહિતનો વર્ણ તેમજ જેના અન્તમાં વિસર્ગ હોય તે, તથા દીર્ઘ તેમજ વળી જેની પાછળ સંયુક્ત વ્યંજન હોય, તે વર્ણ 'ગુરૂ' જાણવો. પાદાન્તાત્મક વર્ણ માત્રામાં વિકલ્પે ગુરૂ ગણાય અને સ્થાપનામાં વક્ર સ્થપાય, જ્યારે બાકીનો એક માત્રિક વર્ણ લઘુ તેમજ સરલ ગણાય.

ક્વચિત્ ગુરૂ વર્ણ લઘુ પણ ગણાય છે અને તે માટે વૃત્તરત્નાકરમાં કહ્યું પણ છે કે—

"पादादाविह वर्णस्य, संयोगः क्रमसंज्ञकः ।
पुरःस्थितेन तेन स्यात्, लघुताऽपि क्वचिद् गुरोः ॥"

–વૃત્ત૦ શ્લો૦ ૧૦.

અર્થાત્—ચરણની આદિમાં રહેલા વર્ણનો સંયોગ ક્રમ-સંજ્ઞક છે અને તે વર્ણ આગળ રહેતાં પાછળનો વર્ણ ગુરૂ બને છે તોપણ તેને ક્વચિત્ લઘુ ગણાય.

હવે ત્રણ વર્ણોના સમૂહને 'ગણ' કહેવામાં આવે છે અને વર્ણની હ્રસ્વતા અને દીર્ઘતાનો વિચાર કરતાં તેના જે આઠ પ્રકારો પડે છે, તે તરફ દૃષ્ટિપાત કરીએ.

જે ગણમાં ત્રણે વર્ણો દીર્ઘ હોય, તેને म (ऽऽऽ) ગણ કહેવામાં આવે છે; જેનો પ્રથમ વર્ણ લઘુ યાને હ્રસ્વ અને બાકીના બે ગુરૂ યાને દીર્ઘ હોય, તે य (।ऽऽ) ગણ કહેવાય છે; જેનો એકલો મધ્ય વર્ણજ હ્રસ્વ હોય, તે र (ऽ।ऽ) ગણ છે; જેનો ખાલી છેવટનોજ વર્ણ ગુરૂ હોય, તે स (।।ऽ) ગણ છે; જેનો છેવટનોજ વર્ણ લઘુ હોય તે त (ऽऽ।) ગણ છે; જેનો મધ્યમજ વર્ણ ગુરૂ હોય, તે ज (।ऽ।) ગણ છે; જેનો આદ્ય વર્ણ એકલોજ ગુરૂ હોય, તે भ (ऽ।।) ગણ છે; અને જેના ત્રણે વર્ણો લઘુ હોય, તે न (।।।) ગણ છે. આ હકીકત નીચેના શ્લોક ઉપરથી જોઇ શકાય છે:—

"सर्वगुर्मो मुखान्तलौ, यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ, भवन्त्यत्र गणास्त्रिकाः ॥"

–વૃત્ત૦ શ્લો૦ ૭.

આ ઉપરથી તાત્પર્ય એ નીકળે છે કે બધું મળીને म, य, र, स, त, ज, भ અને न એમ આઠ ગણો છે.

વિશેષમાં અમુક વર્ણ હ્રસ્વ છે કે દીર્ઘ છે તે દર્શાવવા ल અને ग એમ અક્ષરોનો અથવા તો '।' 'ऽ' (અથવા '⏑' '–') ચિહ્નોનો ઉલ્લેખ કરવામાં આવે છે.

એ વાત પણ સાથોસાથ ધ્યાનમાં રાખવી જરૂરી છે કે દરેક છંદમાં 'યતિ' એટલે વિશ્રામ-સ્થાન હોય છે, અર્થાત્ અમુક અક્ષરો સાથે બોલ્યા બાદ વિરામ લઇ શકાય છે.

આ વિવેચન ઉપરથી જોઇ શકાય છે કે આ કાવ્યનું પ્રથમ પદ્ય 'સમવૃત્ત'માં રચાયેલું છે અને તેમાં એકંદર ૧૪ વર્ણો છે. વળી તેમાં त, भ, ज અને ज એમ ચાર ગણો છે અને પહેલા આઠ અક્ષરો બોલ્યા પછી તેમજ ત્યાર પછીના બીજા છ અક્ષરો ઉચ્ચાર્યા બાદ અટકવાનું આવે છે. અર્થાત્ આ વૃત્તમાં બે 'યતિ' છે. આથી વૃત્તરત્નાકરમાં આપેલા—

"उक्ता 'वसंततिलका' तभजा जगौ गः"

—લક્ષણ મુજબ આ વૃત્ત **વસંતતિલકા** સિદ્ધ થાય છે. આ વાત સ્પષ્ટ સમજાય તેટલા માટે આ પદ્યનું પ્રથમ પાદ વિચારીએ.

नम् रेन्द् र । मौ लि ग । लि तोत् त । म पा रि । जा त
त भ ज ज ग ल

આ પદ્યમાં પાદાન્ત અક્ષર જો કે હ્રસ્વ છે, છતાં ઉપર્યુક્ત નિયમાનુસાર તેને દીર્ઘ ગણી શકાય છે અને એથી કરીને **વસંતતિલકા**ના ઉપર બાંધેલા લક્ષણ સાથે વિરોધ આવતો નથી.

કેટલાકને ગણના આધારે બાંધવામાં આવેલાં લક્ષણો ઝટ ગળે ઉતરતાં નથી, તો તેમને સારૂ 'નામ તેવું કામ' એ વાક્યને ચરિતાર્થ કરનારા [1]**શ્રુતબોધ** નામના છન્દઃશાસ્ત્રને આધારે, આ તેમજ ત્યાર પછીનાં પદ્યોનાં લક્ષણો વિચારવામાં આવે છે. તેમાં **વસંતતિલકા**ના સંબંધમાં કહ્યું છે કે—

"आद्यं द्वितीयमपि चेद् गुरु तच्चतुर्थं
यत्राष्टमं च दशमान्त्यमुपान्त्यमन्त्यम् ।
अष्टाभिरिन्दुवदने ! विरतिश्च षड्भिः[2]
कान्ते ! 'वसन्ततिलकां' किल तां वदन्ति ॥"

—શ્રુત૦ શ્લો૦ ૩૬.

અર્થાત્ હે ચન્દ્રમુખી (ચતુરા)! જે પદ્યમાં પહેલા, બીજા, ચોથા, આઠમા, અગ્યારમા, તેરમા તેમજ ચૌદમા અક્ષરો યાને વર્ણો દીર્ઘ હોય અને જ્યાં આઠમે અને છઠ્ઠે અક્ષરે વિરામ લેવાતો હોય, તેને હે કાન્તા! (પણ્ડિતો) ખચ્ચિત 'વસન્તતિલકા' કહે છે.

આ પદ્ય-મીમાંસાનું પ્રકરણ સમાપ્ત કરીએ તે પૂર્વે આ **વસંતતિલકા**નાં અન્ય નામો તરફ ઉડતી નજર ફેંકી લઇએ. આ નામો તે બીજાં કોઇ નહિ પણ **સિંહોદ્ધતા**, **ઉદ્ધર્ષિણી**, **મધુમાધવી** તેમજ **ઇન્દુવદના** છે.[3]

પદ્ય-ચમત્કાર—

શ્રીબપ્પ-ભટ્ટિસૂરિએ વિવિધ જાતના શબ્દાલંકારથી યુક્ત પદ્ય રચેલાં છે. તેમાં આ પ્રથમ પદ્ય યમક-વિશેષથી શોભી રહ્યું છે. આ પદ્ય તરફ દૃષ્ટિપાત કરતાં જોઇ શકાય છે કે પ્રથમ અને દ્વિતીય ચરણના છેવટના છ અક્ષરો અને તૃતીય અને ચતુર્થ ચરણના છેવટના

---

૧ આ ગ્રન્થ મહાકવિ કાલિદાસે રચ્યો છે એમ કહેવામાં આવે છે. એમાં છન્દોનાં લક્ષણો એટલાં સરસ આપ્યાં છે કે શ્રવણમાત્રથી તેનો બોધ થઈ જાય. વિશેષમાં આ ગ્રંથ શૃંગાર રસને પુષ્ટ કરે છે, કેમકે દરેક છંદનું લક્ષણ કાલિદાસે પોતાની પ્રિયાને ઉદ્દેશીને બાંધ્યું છે.

૨ 'कामाङ्कुशाङ्कुशितकामिमतङ्गजेन्द्रे !' इति पाठान्तरम् ।

૩ સરખાવો—"उक्ता 'वसन्ततिलका' तभजा जगौ गः
'सिंहोद्धते'यमुदिता मुनिकाश्यपेन ।
'उद्धर्षिणी'ति गदिता मुनिसैतवेन
श्रीपिङ्गलेन कथिता 'मधुमाधवी'ति ॥"

—વૃત્ત૦ સમવૃત્તપ્રકરણ.

પાંચ અક્ષરો સમાન છે. આ ઉપરથી આ પદ્ય પાદાંતસમપંચાક્ષરપુનરાવૃત્તિરૂપ ચમકથી અલંકૃત છે એમ કહેવું સર્વથા ખોટું નહિ ગણાય.

* * * *

जिनवराणां प्रार्थना—

दारिद्र्यमद्रिसमविग्रहतापनीय-
राशिप्रदानविधिना महताऽपनीय ।
यैर्दुःखशत्रुरिह जन्मवतामघानि
निघ्नन्तु ते जिनवरा भवतामघानि ॥ २ ॥

—वसन्त०

## टीका

यैर्जिनवरैर्दारिद्र्यं अपनीय-तिरस्कृत्य दुःखशत्रुरिह लोके अघानि-हतः । केन? अद्रिसमो विग्रहो-देहो यस्य तापनीयराशेस्तस्य प्रदानविधिस्तेन । किंविशिष्टेन? महता वर्षप्रमाणेन ॥ २ ॥

## अन्वयः

यैः महता अद्रि-सम-विग्रह-तापनीय-राशि-प्रदान-विधिना जन्मवतां दारिद्र्यं अपनीय दुःख-शत्रुः इह अघानि, ते जिन-वराः भवतां अघानि निघ्नन्तु ।

## શબ્દાર્થ

दारिद्र्यं (मू० दारिद्र्य)=દરિદ્રતા, ગરીબાઇ.
अद्रि=પર્વત.
सम=સમાન.
विग्रह=દેહ, શરીર.
तापनीय=સુવર્ણ, સોનું.
राशि=ઢગલો.
प्रदान=ત્યાગ, દાન.
विधि=વિધાન, કરવું તે.
अद्रिसमविग्रहतापनीयराशिप्रदानविधिना=પર્વત-સમાન દેહ છે જેનો એવા સોનાના ઢગલાનું દાન દેવા વડે.
महता (मू० महत्)=વિશાળ.
यैः (मू० यद्)=જે વડે.
दुःख=દુઃખ, પીડા.
शत्रु=દુશ્મન, વૈરી.
दुःखशत्रुः=દુઃખરૂપ દુશ્મન.
इह=આ જગતમાં.
जन्मवतां (मू० जन्मवत्)=પ્રાણીઓના.
अघानि (धा० हन्)=નષ્ટ થતો હવો.
निघ्नन्तु (धा० हन्)=નાશ કરો.
ते (मू० तद्)=તે.
जिन=વીતરાગ.
वर=શ્રેષ્ઠ.
जिनवराः (मू० जिनवर[१])=જિનેશ્વરો, તીર્થંકરો.
भवतां (मू० भवत्)=તમારાં.
अघानि (मू० अघ)=પાપો.

---

१ 'જિનવર' શબ્દના અર્થ સારૂ જુઓ સ્તુતિ-ચતુર્વિંશતિકા (પૃ० ૧૪).

## શ્લોકાર્થ

**જિનેશ્વરોને પ્રાર્થના—**

"પર્વતના સમાન શરીર છે જેનું એવા સુવર્ણના રાશિનું વિસ્તીર્ણ (અર્થાત્ એક વર્ષ પર્યંત) દાન દેવા વડે કરીને જેમણે પ્રાણીઓના [1]દારિદ્યને દૂર કરીને તેમના (તે) દુઃખરૂપ દુશ્મનનો આ જગત્માં નાશ કર્યો, તે જિનેશ્વરો (હે [2]ભવ્યો!) તમારાં પાપોને સુતરાં નષ્ટ કરો."—૨

## સ્પષ્ટીકરણ

**સાંવત્સરિક દાન—**

દરેક તીર્થંકર દીક્ષા લે તે પૂર્વે અર્થાત્ ગૃહ-વાસનો ત્યાગ કરે તે પહેલાં એક વર્ષ પર્યંત દાન દે છે. આ દાન કરતાં એવી ઉદ્ઘોષણા કરાવવામાં આવે છે કે જે જેનો અર્થી હોય, તેણે આવીને તે ગ્રહણ કરવું. આ પ્રમાણેની ઉદ્ઘોષણાનું શ્રવણ કર્યા બાદ યાચકો પ્રભુ પાસે દાન લેવા આવે છે. ઇન્દ્રના આદેશથી [3]કુબેરે પ્રેરેલા [4]જૃમ્ભક દેવતાઓ ઘણા સમયથી ભ્રષ્ટ થયેલું, સ્મશાનાદિક ગૂઢ સ્થલમાં રહેલું, માલિકી વિનાનું એવું રૂપ્ય (રૂપું), સુવર્ણ, રત્નાદિક દ્રવ્ય અનેક સ્થલેથી લાવીને પ્રભુ સમક્ષ હાજર કરે છે. પ્રભુ બરોબર એક વર્ષ સુધી સૂર્યોદયથી માંડીને તે ભોજનના સમય સુધી દાન દે છે અને તેમાં પણ યાચકની પ્રાર્થનાનુસાર તેને દાન દેવામાં આવે છે. છતાં પણ એ ધ્યાનમાં રાખવું કે પ્રભુના અતિશયને લીધે કોઇ પણ યાચક અસંભવિત વસ્તુની કે અમર્યાદિત દાનની યાચના કરી શકતો નથી. દિન-પ્રતિદિન એક ક્રોડ અને આઠ લાખ [5]સુવર્ણનું દાન દેવામાં આવે છે. આ પ્રમાણે ૩૬૦ દિવસ લેખે વર્ષ ગણતાં એક વર્ષમાં તીર્થંકર દીક્ષા લે તે પૂર્વે તે ત્રણસે અઠ્યાસી ક્રોડ અને એંસી લાખ (૩૮૮,૮૦૦૦૦૦૦) સુવર્ણનું દાન દે છે.

---

૧ દારિદ્ય અને તેનાથી થતી અવનતિ એ સંબંધમાં જુઓ **શ્રીચતુર્વિંશતિજિનાનન્દસ્તુતિ**ના ૧૨ મા પદ્ય ઉપરનું મારૂં સ્પષ્ટીકરણ (પૃ૦ ૨૫-૨૬).

૨ ભવ્યના સ્વરૂપ સારૂ જુઓ **સ્તુતિ-ચતુર્વિંશતિકા** (પૃ૦ ૪-૫).

૩-૪ કુબેર અને જૃમ્ભક સંબંધી માહિતી માટે જુઓ **સ્તુતિ-ચતુર્વિંશતિકા** (પૃ૦ ૩૨).

૫ 'સુવર્ણ' એ સોનાનો સિક્કો છે. (જુઓ મૃચ્છકટિક.) વિશેષમાં આશરે ૧૭૫ ગ્રેઇન (ટ્રૉય) જેટલા સોનાના વજનનું નામ પણ 'સુવર્ણ' છે. **અભિધાન-ચિન્તામણિ** (કા૦ ૩, શ્લો૦ ૫૪૮) માં પણ કહ્યું છે કે-

"माषो दशार्धगुञ्जः, षोडशमाषो निगद्यते कर्षः ।
ससुवर्णस्य सुवर्णस्तैरेव पलं चतुर्भिश्च ॥" —આર્યા.

અર્થાત્ ૮૦ રત્તી યાને ૧૬ માષ અથવા ૧ કર્ષ જેટલા સોનાના વજનને 'સુવર્ણ' કહેવામાં આવે છે. આ ઉપરથી એમ પણ માની શકાય કે સુવર્ણ નામના સિક્કાનું વજન પણ ઉપર જણાવ્યા મુજબ હોય. વળી એચ. એચ. વિલ્સન (H. H. Wilson)ની ૧૧મી કૃતિ (vol.)ના ૪૭મા પૃષ્ઠ ઉપરથી જોઇ શકાય છે કે આ સિક્કાની કીંમત ઓછામાં ઓછી આશરે ૯ રૂપિયા જેટલી હોવી જોઇએ.

પદ્ય-ચમત્કાર—

આ પદ્યનાં ચારે ચરણોના છેવટના પાંચ અક્ષરો સમાન છે. આથી કરીને આ પદ્ય [1]પાદાંતસમપંચાક્ષરપુનરાવૃત્તિરૂપ યમકથી અલંકૃત છે એમ જોઇ શકાય છે.

* * * *

जैनसिद्धान्तप्रशंसा—

यद् दोषदारुदहनेषु रतः कृशानुः
स्यादापदुर्व्यपि हि यत् स्मरतः कृशा नुः ।
यद् वृष्टिरेव परिदाहिषु मेघजाऽलं
जैनं मतं हरतु तद् गुरु मेऽघजालम् ॥ २ ॥

—वसन्त०

## टीका

यन्मतं दोषदारुदहनेषु रतः कृशानुः स्यात्-भवेत् । नुः-पुरुषस्य । किंविशिष्टस्य? स्मरतः । किं? यत् । उर्वी अपि आपत् कृशा-तन्वी भवति । यन्मतं वृष्टिरेव परिदहनशीलेषु । किंभूता? मेघजाऽलं, तन्मतं, गुरु-विस्तीर्णं, मे-मम ॥ २ ॥

## अन्वयः

यद् दोष-दारु-दहनेषु रतः कृशानुः, यद् स्मरतः नुः उर्वी अपि आपत् हि कृशा स्यात्, यद् परिदाहिषु अलं मेघ-जा वृष्टिः एव तद् जैनं मतं मे गुरु अघ-जालं हरतु ।

## શબ્દાર્થ

यद् (मू० यद्)=જે.
दोष=દોષ, દૂષણ.
दारु=કાષ્ઠ, લાકડું.
दहन=બાળવું તે.
दोषदारुदहनेषु=દોષરૂપી કાષ્ઠને બાળવામાં.
रतः (मू० रत)=અનુરક્ત, આસક્ત.
कृशानुः (मू० कृशानु)=અગ્નિ.
स्यात् (धा० अस्)=થાય.
आपद्=આપત્તિ, વિપત્તિ.
उर्वी (मू० उरु)=મોટી.
अपि=પણ.
हि=નિશ્ચયાત્મક અવ્યય.

---

૧ આ પ્રકારના યમકથી વિભૂષિત કાવ્ય જોવું હોય, તો સ્તોત્ર-રત્નાકરના દ્વિતીય ભાગના પત્રાંક ૮૯-૯૪ તરફ દૃષ્ટિપાત કરો. ત્યાં જે વિહરમાણ-વિંશતિ-જિનસ્તવ નામનું કાવ્ય આપેલું છે, તેનું કેવળ પ્રથમ પદ્ય અત્ર ઉદાહરણ તરીકે આપવામાં આવે છે.

"सीमंधराधीश ! महाविदेह-
क्षोणीवतंसः सुमहा विदेह ! ।
भवान् भवत्ताविप ! वै नतेऽघ-
श्रीदोऽस्तु मे रुग्विपवैनतेय ! ॥" —ઉપજાતિ.



निर्वाणकलिकायाम्—

"श्रुतदेवतां शुक्लवर्णां हंसवाहनां चतुर्भुजां वरदकमलान्वित-दक्षिणकरां पुस्तकाक्षमालान्वितवामकरां चेति ।"

 नि. सा. प्रेस.

यद् ( मू० यद् )=જેને.
स्मरतः ( मू० स्मरत् )=યાદ કરનારા.
कृशा ( मू० कृश )=અલ્પ.
नुः ( मू० नृ )=મનુષ્યની.
वृष्टिः ( मू० वृष्टि )=વૃષ્ટિ, વરસાદ.
एव=જ.
परिदाहिषु ( मू० परिदाहिन् )=સંતપ્તને વિષે.
मेघ=મેઘ, જળનું વાદળું.
जन्=ઉત્પન્ન થવું.
मेघजा=મેઘથી ઉત્પન્ન થનારી.
अलं=અત્યંત.
जैनं ( मू० जैन )=જૈન, જિન-વિષયક.
मतं ( मू० मत )=મત, દર્શન, સિદ્ધાન્ત.
हरतु ( धा० हृ )=હરો, નાશ કરો.
तद् ( मू० तद् )=તે.
गुरु=વિસ્તીર્ણ.
मे ( मू० अस्मद् )=મારા.
अघ=પાપ.
जाल=સમૂહ.
अघजालं=પાપના સમૂહને.

## શ્લોકાર્થ

**જૈન સિદ્ધાન્તની પ્રશંસા—**

" જે (સિદ્ધાન્ત) દૂષણરૂપ કાષ્ઠને બાળી નાંખવામાં અનુરક્ત અગ્નિના સમાન હોય, તેમજ જેનું સ્મરણ કરનારા માનવની મોટી આપત્તિઓ પણ ખચ્ચિત અલ્પ થઇ જાય (અર્થાત્ તેનો અંત આવે) તથા જે (સંસારના સંતાપથી) દગ્ધ થયેલાઓને વિષે (શાંતિ અર્પણ કરવામાં) મેઘથી ઉત્પન્ન થયેલી અત્યંત વૃષ્ટિજ છે, તે જૈન શાસન મારા વિસ્તીર્ણ પાપ-સમૂહનો નાશ કરો."—૩

## સ્પષ્ટીકરણ

પદ્ય-ચમત્કાર—

આ પદ્યનાં ચરણો તરફ દૃષ્ટિપાત કરતાં જોઇ શકાય છે કે તેનાં પ્રથમ અને દ્વિતીય ચરણોના છેવટના પાંચ અક્ષરો અને બાકીનાં બે ચરણોના છેવટના ચાર અક્ષરો સમાન છે.

* * * *

**श्रुतदेवता-संकीर्तनम्—**

यां द्राग् भवन्ति सुरमन्त्रिसमा नमन्तः
संत्यज्य मोहमधियोऽप्यसमानमन्तः ।
वाग्देवता हतकुवादिकुला भवर्णात्
सा पातु कुन्दविकसन्मुकुलाभवर्णा ॥ ४ ॥ १ ॥

—वसन्त०

## टीका

सा वाग्देवता भवर्णात् पातु । यां अधियोऽपि जना नमन्तः सुरमन्त्रिसमा भवन्ति । मोहं-अज्ञानं संत्यज्य । किंविशिष्टं ? असमानं, अन्तर्-मध्यवर्तिनं च । कुन्द-विकसन्मुकुलानां आभा-छाया यस्य वर्णस्य एवंविधो वर्णो यस्याः सा ॥ ४ ॥

## अन्वयः

अ-समानं,अन्तर् मोहं संत्यज्य यां नमन्तः अ-धियः अपि द्राक् सुर-मन्त्रि[न्]-समाः भवन्ति सा हत-कु-वादिन्-कुला, कुन्द-विकसत्-मुकुल-आभ-वर्णा वाच्-देवता भव-ऋणात् (वः) पातु ।

## શબ્દાર્થ

यां ( मू० यद् )=જેને.
द्राक्=સત્વર, ઝટ.
भवन्ति ( धा० भू )=પામે છે.
सुर=દેવતા.
मन्त्रि[न्]=પ્રધાન.
सुरमन्त्रिसमाः=દેવગુરૂ(બૃહસ્પતિ)ના સમાન.
नमन्तः ( मू० नमत् )=નમસ્કાર કરનારા.
संत्यज्य ( धा० त्यज् )=ત્યાગ કરીને, તજી દઇને.
मोहं ( मू० मोह )=મોહને, અજ્ઞાનને.
धी=બુદ્ધિ, મતિ.
अधियः=અવિદ્યમાન છે બુદ્ધિ જેને વિષે એવા, જડ.
समान=તુલ્ય.
असमानं=નિરૂપમ, અસાધારણ.
अन्तर्=મધ્યવર્તી, આન્તરિક.
वाच्=વાણી.
देवता=દેવતા.
वाग्देवता=સરસ્વતી, શ્રુત-દેવતા.
हत ( धा० हन् )=નષ્ટ કરેલ.
कु=અનિષ્ટવાચક શબ્દ.
वादिन्=વાદી.
कुल=સમૂહ, સમુદાય.
हतकुवादिकुला=નાશ કર્યો છે [1]કુવાદીના સમુદાયનો જેણે એવી.
भव=સંસાર.
ऋण=ઋણ, દેવું, કરજ.
भवर्णात्=સંસારરૂપી કરજમાંથી.
सा ( मू० तद् )=તે.
पातु ( धा० पा )=રક્ષણ કરો, બચાવો.
कुन्द=મોગરાનું ફૂલ.
विकसत् ( धा० कस् )=વિકાસ પામતી, ખીલતી.
मुकुल=કળી, કલિકા.
आभा=છાયા, કાન્તિ.
वर्ण=વર્ણ, રંગ.
कुन्दविकसन्मुकुलाभवर्णा=કુન્દની વિકસ્વર થતી કલિકાની છાયા જેવો વર્ણ છે જેનો એવી.

## શ્લોકાર્થ

[2]શ્રુત-દેવતાની સ્તુતિ—

"અસાધારણ તેમજ આન્તરિક એવા અજ્ઞાનને તજી દઇને, જેને નમસ્કાર કરનારા જડ (મનુષ્યો) પણ બૃહસ્પતિસમાન બને છે, તે શ્રુત-દેવતા કે જેણે કુવાદીઓના કુલનો સંહાર કર્યો છે તેમજ વળી જેનો વર્ણ કુન્દ(કુસુમ)ની વિકસ્વર થતી કલિકાની કાંતિના જેવો છે, તે સરસ્વતી (હે ભવ્ય જનો ! તમને) ભવરૂપી કરજમાંથી બચાવો."—૪

## સ્પષ્ટીકરણ

પદ્ય-ચમત્કાર—

આ પદ્યનાં ચારે ચરણોના છેવટના પાંચ અક્ષરો સમાન છે. આથી કરીને આ પદ્ય પણ દ્વિતીય પદ્યની જેમ [illegible] સમકથી અલંકૃત છે.

૧ [illegible]
૨ [illegible] શ્લોકમાં પણ શ્રુત-દેવતાની સ્તુતિ કરવામાં આવી છે.

**શ્રુત-દેવતાનું સ્વરૂપ—**

શ્રુત-દેવતાના સંબંધમાં એવો ઉલ્લેખ છે કે તે શ્રુતની અધિષ્ઠાયિકા છે. વળી તેનો વર્ણ ચન્દ્ર, ક્ષીર, હિમ ઇત્યાદિના જેવો ધવલ છે અને તે કમલના ઉપર આરૂઢ થાય છે. વિશેષમાં તેને ચાર હાથ છે. તેના જમણા બે હાથ પુસ્તક અને માલા વડે અલંકૃત છે, જ્યારે ડાબા બે હાથ વીણા અને કમલથી વિભૂષિત છે. આ દેવીના સંબંધમાં નીચેનો શ્લોક પણ વિચારવા જેવો છે.

"प्रकटपाणितले जपमालिका
कमलपुस्तकवेणुवराधरा ।
धवलहंससमा श्रुतवाहिनी
हरतु मे दुरितं भुवि भारती ॥" —દ્રુતવિલમ્બિત.






अथ श्रीअजितनाथस्य स्तुतिः—

कुसुमबाणचमूभिरपीडित-
त्रिभिरतीव जगद्भिरपीडितः ।
सकललोकमवन् वृजिनाजितः
शमयताद् दुरितानि जिनाजितः ॥ ५ ॥

—द्रुतविलम्बितम्

### टीका

जिनश्चासावजितश्च स जिनाजितो दुरितानि शमयतात् । किं० ? कुसुमवाणस्य-कन्दर्पस्य चम्वः शब्दाद्यास्ताभिः अपीडितः । त्रिजगद्भिः ईडितः—स्तुतः । किं कुर्वन् ? अवन्—रक्षन्, (कं ?) सकललोकं, (कस्मात् ?) वृजिनं—पापं तदेवाजिः—संग्रामस्ततः ॥ ५ ॥

### अन्वयः

कुसुम-वाण-चमूभिः अ-पीडितः, त्रिभिः जगद्भिः अपि अतीव ईडितः, वृजिन-आजि-तः सकल-लोकं अवन् जिन-'अजितः' दुरितानि शमयतात् ।

### શબ્દાર્થ

कुसुम=પુષ્પ, ફૂલ.
वाण=બાણ.
कुसुमवाण=પુષ્પ છે બાણ જેનું તે, કામદેવ.
चमू=લશ્કર, સેના, ફોજ.
कुसुमवाणचमूभिः=કામદેવની સેનાઓ વડે.
पीडित (धा० पीड्)=દુઃખી થયેલ.
अपीडितः=નહિ પીડાયેલ.
त्रिभिः (मू० त्रि)=ત્રણ વડે.
अतीव=અત્યંત.
जगद्भिः (मू० जगत्)=જગતો વડે.
ईडितः (मू० ईडित)=સ્તુતિ કરાયેલ.
सकल=સમસ્ત.
लोक=જગત, દુનિયા, વિશ્વ.
सकललोकं=સમસ્ત જગતને.
अवन् (मू० अवत्)=પાળનારા, રક્ષણ કરનારા.
वृजिन=પાપ.
आजि=સંગ્રામ, લડાઇ.
वृजिनाजितः=પાપરૂપ સંગ્રામથી.
शमयतात् (धा० शम्)=શાંત કરો, નષ્ટ કરો.
दुरितानि (मू० दुरित)=પાપોને.
अजित=અજિતનાથ, બીજા તીર્થંકર.
जिनाजितः=અજિત જિન.

## શ્લોકાર્થ

**શ્રીઅજિતનાથની સ્તુતિ—**

" કંદર્પના સૈન્ય વડે નહિ પીડાયેલા એવા, તથા ત્રણે જગત્ વડે પણ અત્યંત સ્તુતિ કરાયેલા, તેમજ પાપરૂપ સંગ્રામથી સમસ્ત વિશ્વનું રક્ષણ કરનારા એવા [1]અજિત જિનેશ્વર ( હે ભવ્ય-જન ! તમારાં ) પાપોને નષ્ટ કરો."—૫

## સ્પષ્ટીકરણ

**પદ્ય-મીમાંસા—**

પદ્ય-ચમત્કારમાં આ કાવ્યમાંના તૃતીય પદ્યને મળતું આવતું આ પદ્ય ( તેમજ ત્યાર પછીનાં ત્રણ પદ્યો ) 'દ્રુતવિલંબિત' છંદમાં રચાયેલ છે. આ છંદનું લક્ષણ એ છે કે—

" अयि कृशोदरि ! यत्र चतुर्थकं
गुरु च सप्तमकं दशमं तथा ।
विरतिजं च तथैव विचक्षणै-
र्द्रुतविलम्बितमित्युपदिश्यते ॥"

—શ્રુત૦ શ્લો૦ ૩૦.

અર્થાત્ હે સૂક્ષ્મ અંગવાળી ! જે સમવૃત્તના ચોથા, સાતમા, દશમા અને અંત્ય અર્થાત્ બારમા અક્ષરો દીર્ઘ હોય છે, તે વૃત્તને પણ્ડિતો 'દ્રુતવિલમ્બિત' કહે છે.

આ વૃત્તમાં न, भ, भ અને र એમ ચાર ગણો છે. આથી કરીને એનું લક્ષણ એમ પણ બાંધવામાં આવે છે કે—

" द्रुतविलम्बितमाह नभौ भरौ"

આ વાત ધ્યાનમાં ઉતરે તેટલા માટે આ પદ્યના પ્રથમ ચરણ પ્રતિ દૃષ્ટિ-પાત કરીએ,

कु सु म । वा ण च । मू भि र । पी डि तः
न भ भ र

* * * *

**जिनेश्वराणां स्तुतिः—**

कृतवतोऽसुमतां शरणान्वयं
सकलतीर्थकृतां चरणान् वयम् ।
सुरकृताम्बुजगर्भनिशान्तकान्
रविसमान् प्रणुमोऽघनिशान्तकान् ॥ ६ ॥

—द्रुत०

---

૧ આ દ્વિતીય જિનેશ્વર અજિતનાથના ચરિત્રનું દિગ્-દર્શન કરવું હોય, તો સ્તુતિ-ચતુર્વિંશતિકા (પૃ૦ ૩૪) તરફ દૃષ્ટિ-પાત કરો.

## टीका

सकलतीर्थकृतां चरणान् वयं प्रणुमः । किंविधान्? कृतवतः । किं? शरणान्वयं-शरणप्रवाहं असुमतां। सुरकृताम्बुजगर्भमेव निशान्तं-गृहं येषां ते सुर०। "शेषाद्विभाषा (द्वा)" (सिद्ध० अ० ७, पा० ३, सू० १७५) इति क (च्) प्रत्ययः। रविसमान्-सूर्यसमान्। अतः अघमेव निशा तस्या अन्तका-विनाशकाः ॥ ६ ॥

## अन्वयः

वयं सकल-तीर्थकृतां असु-मतां शरण-अन्वयं कृतवतः, सुर-कृत-अम्बुज-गर्भ-निशान्तकान्, रवि-समान्, अघ-निशा-अन्तकान् चरणान् प्रणुमः।

## શબ્દાર્થ

कृतवतः (मू० कृतवत्)=કરેલા.
असु=પ્રાણ.
असुमतां (मू० असुमत्)=પ્રાણીઓના.
शरण=શરણ, બચાવ.
अन्वय=સંતતિ, પ્રવાહ.
शरणान्वयं=શરણની સંતતિને.
तीर्थ=(૧) ચતુર્વિધ સંઘ; (૨) દ્વાદશાંગી; (૩) પ્રથમ ગણધર.
कृत्=કરનાર.
तीर्थकृत्=તીર્થંકર, તીર્થપતિ.
सकलतीर्थकृतां=સર્વ તીર્થંકરોના.
चरणान् (मू० चरण)=પાદોને, ચરણોને.
वयं (मू० अस्मद्)=અમે.
कृत (धा० कृ)=કરેલ, રચેલ.
अम्बु=જલ.
अम्बुज=જલમાં ઉત્પન્ન થાય તે, કમલ.
गर्भ=મધ્ય ભાગ.
निशान्त=ગૃહ.
सुरकृताम्बुजगर्भनिशान्तकान्=દેવ-રચિત કમલોનો મધ્ય ભાગ છે ગૃહ જેનું એવા.
रवि=સૂર્ય, સૂરજ.
रविसमान्=સૂર્યસમાન.
प्रणुमः (धा० नु)=સ્તુતિ કરીએ છીએ.
निशा=રાત્રિ, રાત.
अन्तक=અન્ત આણનારા, વિનાશ કરનારા.
अघनिशान्तकान्=પાપરૂપી રાત્રિનો અંત આણનારા.

## શ્લોકાર્થ

જિનેશ્વરોની સ્તુતિ—

"પ્રાણીઓના શરણની સંતતિને કરેલાં (અર્થાત્ અનેક ભવ્ય જીવો વડે આશ્રય લેવાયેલાં) એવાં, તથા દેવ-રચિત કમલનો મધ્ય ભાગ છે ગૃહ જેનું એવાં,[1] વળી સૂર્ય-સમાન અને (અતએવ) પાપરૂપી રાત્રિનો અંત આણનારાં એવાં [2]સમસ્ત તીર્થપતિઓનાં ચરણોને અમે સ્તવીએ છીએ."—૬

---

૧ જિનેશ્વરનાં ચરણોની નીચે દેવતાઓ કમલ સ્થાપે છે એ અત્ર સૂચવવામાં આવ્યું છે. આ વાતની ભક્તામર-સ્તોત્ર (શ્લો૦ ૩૨) પણ સાક્ષી પૂરે છે. આ હકીકત ઉપર સ્તુતિ-ચતુર્વિંશતિકા (પૃ૦ ૧૦૨) પણ પ્રકાશ પાડે છે.

૨ સમસ્ત તીર્થપતિઓથી ગત ચોવીસીના ચોવીસ તીર્થંકરો સમજવા એ તો દેખીતી વાત છે. છતાં પણ આ સંબંધમાં વિશેષ માહિતી જોઇતી હોય તો સ્તુતિ-ચતુર્વિંશતિકાના પૃ૦ ૩૭-૩૯ તરફ દૃષ્ટિ-પાત કરો.

## સ્પષ્ટીકરણ

પદ્ય-ચમત્કાર—

આ તેમજ ત્યાર પછીનાં બે પદ્યો પણ [1]પાદાંતસમચતુરક્ષરપુનરાવૃત્તિરૂપ યમકથી શોભે છે, કેમકે તેનાં ચારે ચરણોમાં છેવટના ચાર ચાર અક્ષરો સમાન છે.

* * * *

---

૧ આ પ્રકારના યમકથી વિભૂષિત એવું એક આઠ પદ્યનું **શ્રીપાર્શ્વજિન-સ્તોત્ર શ્રીજિનપ્રભસૂરિએ** રચેલું છે. તે નીચે મુજબ છેઃ—

"श्रीपार्श्व! पादानतनागराज!
प्रोत्सर्पदेनःकफनागराज!।
सतां हृतासत्परिणामरागं
त्वां संस्तुमः स्थैर्यगुणामरागम्" ॥ १ ॥–ઉપજાતિ.

"હે શ્રીપાર્શ્વ! જેનાં ચરણોને પ્રણામ કર્યો છે નાગરાજે (ધરણેન્દ્રે) એવા હે નાથ! વધતા જતા એવા પાપરૂપી કફ પ્રતિ (તેનો વિનાશ કરવામાં) સુંઠ સમાન! હે જન્મ-રહિત (જિનેશ્વર)! નાશ કર્યો છે સજ્જનોના દુષ્ટ પરિણતિવાળા રાગનો જેણે એવા તથા સ્થિરતારૂપી ગુણમાં મેરૂસમાન એવા તને અમે સ્તવીએ છીએ."—૧

"ये मर्त्यदेवासुरमाननीयं
पश्यन्ति ते श्रीभरमाननीयम्।
सद्यस्त्रिलोकीतिलकामितानि
सिध्यन्ति तेषामिह कामितानि" ॥ २ ॥–ઇન્દ્રવજ્રા.

"હે ત્રૈલોક્યને વિષે તિલકસમાન (તીર્થંશ્વર)! માનવ, દેવ અને દાનવને માનનીય એવું તેમજ વળી શોભાથી ભરપૂર એવા તારા મુખને જેઓ જુએ છે, તેમના અપરિમિત મનોરથો અત્ર સત્વર ફલીભૂત થાય છે."—૨

"दृशोर्द्वयं पद्मदलानुकारं
नाशिश्रयत् ते कमलानुकारम्?।
कुतोऽन्यथा त्वन्नतिदीक्षितेषु
सर्वश्रियां प्रेम तदीक्षितेषु?" ॥ ३ ॥–ઉપજાતિ.

"પદ્મના પત્રનું અનુકરણ કરનારા એવા તારા નેત્ર-યુગલ શું લક્ષ્મીનું અનુકરણ નથી કરતા? એમ નહિ હોય તો તારા પ્રણામને વિષે દીક્ષિત તેમજ તારા નેત્ર-યુગલ વડે જોવાએલા (અર્થાત્ તારા કૃપા-પાત્ર) એવા (મનુષ્યો) ને વિષે સમસ્ત સંપત્તિનો પ્રેમ ક્યાંથી (હોય)?"—૩

"अभ्यर्हितं भव्यकदम्बकानां
हर्षप्रकर्षोल्लसदम्बकानाम्।
सेवन्ति ये त्वां विधिवद्भजन्ते
निर्वाणसौख्यं बुधवल्लभं ते" ॥ ४ ॥–ઇન્દ્રવજ્રા.

"હર્ષના પ્રકર્ષને લઇને દેદીપ્યમાન છે નેત્રો જેનાં એવા ભવ્ય-સમુદાયોને પૂજ્ય (તેમજ પણ્ડિતોને પ્રિય) એવા તને જેઓ વિધિપૂર્વક ભજે છે, તેઓ પણ્ડિતોને પ્રિય એવું મોક્ષનું સુખ પામે છે."—૪

जिनवाणी-प्रशंसा—

कृतसमस्तजगच्छुभवस्तुता
जितकुवादिगणाऽस्तभवस्तुता ।
अवतु वः परिपूर्णनभा रती-
र्नृमरुते ददती जिनभारती ॥ ७ ॥

—द्रुत०

---

" रतेरहंकृत्यपनायिकाभि-
र्वपुःश्रिया ते सुरनायिकाभिः ।
माक्षोभि चेतः परभावलीन-
मचिन्त्यविस्तारिशुभावलीनम् " ॥ ५ ॥—ઉપજાતિ.

"(કંદર્પની પત્ની) રતિના ગર્વને દૂર કરનારી એવી સુરાંગનાઓ પોતાના દેહની સંપત્તિદ્વારા, ઉત્તમ ભાવને વિષે લીન એવા, તેમજ અચિન્ત્ય, વિસ્તીર્ણ અને શુભ એવી શ્રેણિઓના સ્વામી એવા તારા ચિત્તને ચલિત કરી શકી નહિ."—૫

" प्रभो ! तवाऽस्तस्मरराजमाने
नखांशुजालेन विराजमाने ।
क्रमाम्बुजे लक्ष्मिगृहे रसेन-
शक्रार्चनीय ! स्तुमहे रसेन " ॥ ६ ॥—ઉપજાતિ.

"હે નાથ ! હે પૃથ્વી-પતિઓના તેમજ ઇન્દ્રોના પૂજ્ય ! લક્ષ્મીના મંદિરરૂપ એવાં, વળી નખનાં કિરણોના સમૂહ વડે શોભતાં, તેમજ વળી દળી નાંખ્યો છે કંદર્પરાજના ગર્વને જેણે એવાં તારાં ચરણોની અમે પ્રેમપૂર્વક સ્તુતિ કરીએ છીએ."—૬

" आकाङ्क्षिता बहुविधं जनताभिरामा-
स्पृष्टा महोदयपुरी ध्रुवताभिरामा ।
अप्यध्वरश्रुतितपःसवनादृते न
पुंसाऽऽप्यते जिन ! तव स्तवनादृतेन ? " ॥ ७ ॥—વસન્તતિલકા.

"લોકો વડે બહુ પ્રકારે આકાંક્ષા (ઇચ્છા) રખાયેલી એવી, વ્યાધિ વડે નહિ સ્પર્શ કરાયેલી (અર્થાત્ અવ્યાબાધ) એવી, તેમજ નિશ્ચયતા વડે મનોહર એવી મહોદય-નગરી (મુક્તિ-પુરી) ને (પણ) યજ્ઞ, શ્રુતિ, તપ અને સ્નાન કર્યા વિના પણ હે વીતરાગ ! તારા સ્તવનને વિષે આદરવાળો મનુષ્ય શું પામતો નથી કે ?"—૭

" इत्थं फणीन्द्रसततश्रितपार्श्व ! नाऽथ
स्त्री वा स्तवं पठति यस्तव पार्श्वनाथ ! ।
तस्मै स्पृहामवृजिनप्रभवाय ! नव्या
लक्ष्मीर्बिभर्ति सुमनःसमवायनव्या " ॥ ८ ॥—વસન્તતિલકા.

"હે નાગેન્દ્ર વડે નિરંતર આશ્રય લેવાયેલી છે જેની બાજુનો એવા હે (નાથ) ! હે પાર્શ્વનાથ ! પુણ્યની ઉત્પત્તિનો લાભ છે જેના દ્વારા એવા હે (ઈશ્વર) ! જે નર કે નારી તારા (આ) સ્તોત્રનું પઠન કરે છે, તેવાની, નવીન (અર્થાત્ તરુણ) એવી તેમજ દેવોના સમુદાયને નવ્ય (સ્તુતિ કરવા લાયક) એવી લક્ષ્મી ઇચ્છા રાખે છે."—૮

## टीका

जिनभारती-वाग् अवतु । वः-युष्मान् । शुभवस्तूनां भावः शुभवस्तुता, कृता समस्तजगतः शुभवस्तुता यया सा तथाविधा । जितः कुवादिगणो यया सा । अस्तो-विक्षिप्तो भवः-संसारो यैः एतावता साधवस्तैः स्तुता इत्यर्थः । गाम्भीर्यशब्देन परिपूर्णं नभो यया । नरश्च मरुतश्च नृमरुत् तस्मै नृमरुते । रतीः-सुखानि । ददती-प्रयच्छन्ती । या वाग् ॥७॥

## अन्वयः

कृत-समस्त-जगत्-शुभ-वस्तुता, जित-कु-वादिन्-गणा, अस्त-भव-स्तुता, परिपूर्ण-नभाः, नृ-मरुते रतीः ददती जिन-भारती वः अवतु ।

## શબ્દાર્થ

समस्त=અખિલ, સંપૂર્ણ.
जगत्=દુનિયા.
शुभ=શુભ.
वस्तु=પદાર્થ.
कृतसमस्तजगच्छुभवस्तुता=કર્યું છે અખિલ વિશ્વને શુભ વસ્તુના ભાવવાળું જેણે એવી.
जित (धा० जि)=જીતેલા, પરાજિત કરેલા.
गण=સમુદાય, સમૂહ.
जितकुवादिगणा=પરાજય કર્યો છે કુવાદીઓના સમુદાયનો જેણે એવી.
स्तुत (धा० स्तु)=સ્તુતિ કરાયેલ.
अस्तभवस्तुता=પરાસ્ત કર્યો છે સંસાર જેમણે એવા વડે સ્તુતિ કરાયેલી.
अवतु (धा० अव्)=બચાવો, રક્ષણ કરો.
वः (मू० युष्मद्)=તમને.
परिपूर्ण (धा० पृ)=પૂરી દીધેલ.
नभस्=આકાશ, ગગન.
परिपूर्णनभाः=પૂરી નાંખ્યું છે ગગન જેણે એવી.
रतीः (मू० रति)=સુખોને.
नृ=મનુષ્ય, માનવ.
मरुत्=દેવ, અમર.
नृमरुते=માનવ અને અમરને.
ददती (धा० दा)=આપનારી.
भारती=વાણી, દેશના.
जिनभारती=જિન-વાણી, જિનેશ્વરની દેશના.

## શ્લોકાર્થ

જિન-વાણીની પ્રશંસા—

"કર્યું છે અખિલ વિશ્વને શુભ વસ્તુના ભાવમય જેણે એવી, તેમજ જીત્યો છે કુવાદીઓના સમુદાયને જેણે એવી, તથા વળી નષ્ટ કર્યો છે (ચોર્યાસી લાખ યોનિરૂપ) સંસાર જેણે એવા (મુનિવરો) વડે સ્તુતિ કરાયેલી, અને વળી (ગાંભીર્યાદિક ગુણે કરીને) પૂરી નાંખ્યું છે ગગન જેણે એવી, તેમજ માનવ તથા દેવને સુખો અર્પણ કરનારી એવી જિન-વાણી (હે ભવ્યો!) તમારૂં રક્ષણ કરો."—૭

ઋ ઋ ઋ ઋ

---

૧ આ સંબંધમાં જુઓ ન્યાયકુસુમાંજલિ (પૃ० ૩૦૧-૩૦૨).

धरणपट्टमहिलायाः स्तुतिः—

सुफणरत्नसरीसृपराजितां
रिपुबलप्रहतावपराजिताम् ।
स्मरत तां धरणाग्रिमयोषितं
जिनगृहेषु ययाऽश्रमयोषितम् ॥ ८ ॥

—द्रुत०

## टीका

धरणाग्रिमयोषितं–पट्टमहिलां स्मरत । किंभूतां ? सुफणेषु रत्नानि येषां ते तथाविधाः सरीसृपाः–सर्पास्तै राजिताम् । रिपुबलप्रहतौ अपराजिताम् । जिनालयेषु यया श्रम–रहितया उषितं–निवसितम् ॥ ८ ॥

## अन्वयः

यया अ-श्रमया जिन-गृहेषु उषितं, तां सु-फण-रत्न-सरीसृप-राजितां, रिपु-बल-प्रहतौ अ-पराजितां (अथवा अपर-अजितां) 'धरण'-अग्रिम-योषितं स्मरत ।

## શબ્દાર્થ

सु=શ્રેષ્ઠતાવાચક અવ્યય.
फण=ફેણ.
रत्न=રત્ન, મણિ.
सरीसृप=સર્પ, સાપ.
राजित (धा० राज्)=શોભાયમાન, સુશોભિત.
सुफणरत्नसरीसृपराजितां=જેની સારી ફેણોમાં રત્ન છે એવા સર્પો વડે સુશોભિત.
रिपु=શત્રુ, દુશ્મન.
बल=સૈન્ય.
प्रहति=નાશ.
रिपुबलप्रहतौ=શત્રુના સૈન્યનો નાશ કરવામાં.
पराजित (धा० जि)=હારી ગયેલ.
अपर=અન્ય.
अजित=નહિ જીતાયેલ.
अपराजितां=(૧) નહિ જીતાયેલી; (૨) અન્ય કોઇથી નહિ જીતાયેલી.
स्मरत (धा० स्मृ)=તમે સ્મરણ કરો.
तां (मू० तद्)=તેને.
धरण=ધરણેન્દ્ર, નાગ-પતિ.
अग्रिम=પ્રથમ, મુખ્ય.
योषित्=સ્ત્રી, પત્ની.
धरणाग्रिमयोषितं=ધરણેન્દ્રની પટ્ટરાણીને.
गृह=ઘર.
जिनगृहेषु=જિનાલયોને વિષે.
यया (मू० यद्)=જેના વડે.
श्रम=પરિશ્રમ, થાક.
अश्रमया=અવિદ્યમાન છે પરિશ્રમ જેને વિષે એવી, થાક-રહિત.
उषितं (धा० वस्)=રહેવાયું, નિવાસ કરાયો.

## શ્લોકાર્થ

ધરણેન્દ્રની પટ્ટરાણીની સ્તુતિ—

"અવિદ્યમાન છે પરિશ્રમ જેને વિષે એવા જેનાથી જિનાલયોમાં નિવાસ કરાયો,

તે, રત્ન છે જેની સારી ફેણોમાં એવા સર્પો વડે સુશોભિત એવી, તેમજ વળી શત્રુઓના સૈન્યનો સંહાર કરવામાં કોઇથી પણ ગાંજી ન જાય એવી (તે) ધરણેન્દ્રની અગ્ર-મહિષીને (હે મુમુક્ષુ જનો!) તમે સ્મરો."—૮

## સ્પષ્ટીકરણ

ધરણેન્દ્ર—

જૈન શાસ્ત્રમાં દેવોના (૧) ભુવનપતિ, (૨) વ્યંતર, (૩) જ્યોતિષ્ક અને (૪) વૈમાનિક એમ ચાર પ્રકારો બતાવ્યા છે. તેમાં વળી ભુવનપતિના (૧) અસુર-કુમાર, (૨) નાગ-કુમાર, (૩) વિદ્યુત્-કુમાર, (૪) સુપર્ણ-કુમાર, (૫) અગ્નિ-કુમાર, (૬) વાયુ-કુમાર, (૭) મેઘ-કુમાર, (૮) ઉદધિ-કુમાર, (૯) દ્વીપ-કુમાર અને (૧૦) દિક્-કુમાર એમ દશ ભેદો છે. આ ભેદોમાંના નાગકુમાર દેવોના બે ઇન્દ્રો છે અને તેમને ધરણ અને ભૂતાનંદના નામથી ઓળખવામાં આવે છે. આ ઉપરથી જોઇ શકાય છે કે ધરણેન્દ્ર એ નાગકુમાર દેવોના ઇન્દ્રનું નામ છે. આ ઇન્દ્ર દક્ષિણ દિશાનો સ્વામી છે. આ ઇન્દ્રને છ અગ્ર-મહિષીઓ છે. તેનાં નામોના સંબંધમાં સ્થાનાંગ-સૂત્ર (પત્રાંક ૩૬૧)માં કહ્યું છે કે—

"धरणस्स णं नागकुमारिंदस्स नागकुमाररन्नो छ अग्गमहिसीओ पं० तं०—(१) अला, (२) सक्का, (३) सतेरा, (४) सोतामणी, (५) इंदा, (६) घणविजया"[1]

અર્થાત્ નાગકુમારનો ઇન્દ્ર ધરણેન્દ્રની (૧) અલા, (૨) શક્રા, (૩) સતેરા, (૪) સૌદામિની, (૫) ઇન્દ્રા અને (૬) ઘનવિદ્યુતા એમ છ પટ્ટરાણીઓ છે.



૧ "धरणस्य नागकुमारेन्द्रस्य नागकुमारराज्ञः षड् अग्रमहिष्यः प्रज्ञप्तास्तद्यथा—(१) अला, (२) शक्रा, (३) सतेरा, (४) सौदामिनी, (५) इन्द्रा, (६) घनविद्युता"।



## ३ श्रीशंभवजिनस्तुतयः

अथ श्रीशंभवनाथस्य स्तुतिः—

नमो भुवनशेखरं दधति! देवि! ते बन्दिता-
मितिस्तुतिपराऽगमत् त्रिदशपावली वन्दिता।
यदीयजननीं प्रति प्रणुत तं जिनेशं भवं
निहन्तुमनसः सदाऽनुपमवैभवं 'शंभवम्' ॥ १ ॥

—पृथ्वी (८,९)

### टीका

यदीयजननीं प्रति त्रिदशपावली—इन्द्रावली बन्देर्भावो—बन्दिता तां बन्दितां अगमत्—गतवती इतिस्तुतिपरा सती हे भुवनमुकुटं पुत्रं दधति—धारयमाणे! हे देवि! ते—तुभ्यं नमोऽस्तु। इन्द्रावली किंभूता? वन्दिता। कैः? देवादिभिः इति गम्यते। तं जिनेशं भवं निहन्तुमनसः सन्तः प्रणुत यूयं निरुपमभूतिम् ॥ १ ॥

### अन्वयः

(हे) भुवन-शेखरं दधति! देवि! ते नमः इति-स्तुति-परा, वन्दिता त्रिदश-प-आवली यदीय-जननीं प्रति बन्दितां अगमत्, तं अनुपम-वैभवं जिन-ईशं 'शंभवं' भवं [1]निहन्तु-मनसः प्रणुत।

### શબ્દાર્થ

नमस्=નમસ્કાર હોજો.
शेखर=મુકુટ.
भुवनशेखरं=ત્રૈલોક્યના મુકુટસમાનને.
दधति! (मू० दधती)=હે ધારણ કરનારી!
देवि! (मू० देवी)=હે દેવી!
ते (मू० युष्मद्)=તને.
वन्दितां (मू० वन्दिता)=બન્દીપણાને.
इति=આ પ્રમાણે.
स्तुति=સ્તુતિ, સ્તવન.
पर=તત્પર.
इतिस्तुतिपरां=એ પ્રમાણેની સ્તુતિમાં તત્પર.
अगमत् (धा० गम्)=પ્રાપ્ત થતી હવી.
त्रिदश=દેવ, સુર.
त्रिदशप=દેવેન્દ્ર, સુરપતિ.
आवली=શ્રેણિ.
त्रिदशपावली=સુરેન્દ્રની શ્રેણિ.

---

१ संबोधनार्थे वा।

वन्दिता ( ધા० वन्द् )=વન્દન કરાયેલી.
यदीय=જેની.
जननी=માતા.
यदीयजननीं=જેની માતાને.
प्रति=ને.
प्रणुत ( ધા० नु )=તમે સ્તુતિ કરો.
तं ( મૂ० तद् )=તેને.
ईश=સ્વામી, પ્રભુ.
जिनेशं=તીર્થપતિને, જિનેશ્વરને.
भवं ( મૂ० भव )=સંસારને.
निहन्तुं ( ધા० हन् )=નાશ કરવાને.
मनस्=મન.
निहन्तुमनसः=નાશ કરવાના મનવાળા.
सदा=સર્વદા, હમેશાં.
अनुपम=અસાધારણ, નિરૂપમ.
वैभव=સંપત્તિ.
अनुपमवैभवं=નિરૂપમ છે સંપત્તિ જેની એવાને.
शंभवं ( મૂ० शंभव )=શંભવ(નાથ)ને.

## શ્લોકાર્થ

**શ્રીશંભવનાથની સ્તુતિ—**

"'હે ત્રૈલોક્યના મુકુટ( સમાન પુત્ર )ને (કુક્ષિમાં) ધારણ કરનારી દેવી! તને નમસ્કાર હોજો' એવી સ્તુતિ કરવામાં તત્પર એવી, તેમજ (દેવ અને દાનવ વડે) વન્દન કરાયેલી એવી સુરપતિઓની શ્રેણિ જેની માતા પ્રતિ બન્દિ-ભાવને ધારણ કરતી હવી, તે અસાધારણ સંપત્તિવાળા (તૃતીય) જિનેશ્વર [1]શંભવ( નાથ )ની (હે ભવ્ય-જનો!) સંસારનો નાશ કરવાના મનવાળા (થયા થકા) તમે સ્તુતિ કરો."—૯

## સ્પષ્ટીકરણ

**પદ્ય-મીમાંસા—**

આ કાવ્યની પદ્ધતિ-અનુસાર આ તેમજ ત્યાર પછીનાં ત્રણ પદ્યો પણ 'પૃથ્વી' નામના સમવૃત્તમાં રચવામાં આવ્યાં છે. એનું લક્ષણ નીચે મુજબ છેઃ—

"द्वितीयमलिकुन्तले ! यदि षडष्टमं द्वादशं
चतुर्दशमथ प्रिये ! गुरु गभीरनाभिह्रदे ! ।
सपञ्चदशमान्तिकं तदनु यत्र कान्ते ! यति-
र्गिरीन्द्रफणिभृत्कुलैर्भवति सुभ्रु ! 'पृथ्वी' हि सा ॥"

—શ્રુત૦ શ્લો૦ ૪૦.

કહેવાનું તાત્પર્ય એ છે કે હે ભ્રમરના સમાન (કૃષ્ણ) કેશવાળી (કામિની)! જે વૃત્તનો બીજો અક્ષર તેમજ હે પ્રિયા! જેના છઠ્ઠા, આઠમા, બારમા તથા ચૌદમા અક્ષરો પણ દીર્ઘ હોય અને વળી હે ઊંડી નાભિરૂપ હ્રદવાળી (લલના)! આ ઉપરાંત જેના પંદરમા અને છેવટના અર્થાત્ સત્તરમા અક્ષરો પણ દીર્ઘ હોય અને હે કાન્તા! જે વૃત્તમાં આઠમા અને ત્યાર પછીના નવ અક્ષરો બાદ વિરામ-સ્થાન હોય, તે વૃત્ત હે સુભ્રુ! 'પૃથ્વી' છે.

આ સત્તર અક્ષરના વૃત્તમાં ज, स, ज, स અને य એમ પાંચ ગણો છે, જ્યારે છેવટના બે અક્ષરો અનુક્રમે હ્રસ્વ અને દીર્ઘ છે. આ વાત લક્ષ્યમાં આવે એટલા માટે આ પદ્યના પ્રથમ પાદ પ્રતિ નજર કરીએ.

---

૧ શ્રીશંભવનાથનું ટૂંક ચરિત્ર સ્તુતિ-ચતુર્વિંશતિકા (પૃ૦ ૪૮-૪૯) ઉપરથી જોઇ શકાશે.

न॑ मो॑ भु॑। व॑ न॑ शो॑। ख॑ र॑ द॑। ध॑ ति॑ दे॑। वि॑ ते॑ वन्॑। दि॑ ता॑
ज स ज स य ल ग

આથી કરીને તો 'પૃથ્વી' નું નીચે મુજબનું લક્ષણ ચરિતાર્થ થાય છે—

"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः"

પદ્ય-ચમત્કાર—

આ પદ્યનાં ચારે ચરણોમાં છેવટના ત્રણ ત્રણ અક્ષરો સમાન છે (કેમકે યમકમય પદ્યમાં બકાર અને વકાર એક ગણાય છે[1]). આ પછીનું પદ્ય પણ આવી જાતના યમકથી વિભૂષિત છે.

* * * *

सकलजिनेश्वराणां जन्माभिषेकः—

सुमेरुगिरिमूर्धनि ध्वनदनेकदिव्यानके
सुरैः कृतमवेक्ष्य यं मुमुदिरेऽतिभव्या न के ।
जगत्रितयपावनो जिनवराभिषेको मलं
सदा स विधुनोतु नोऽशुभमयं घनाकोमलम् ॥ १० ॥

—पृथ्वी

## टीका

ध्वनन्तः-शब्दयन्तः अनेक(के) दिव्यानका-दिव्यपटहा यस्मिन्। अतीव भव्याः के न प्रमुदिताः ?। नः-अस्माकं मलं-अष्टप्रकारं कर्म विधुनोतु-अपनयतु। घनं च-तत् अकोमलं च कठिनमित्यर्थः ॥ १० ॥

## अन्वयः

ध्वनत्-अनेक-दिव्य-आनके सुमेरु-गिरि-मूर्धनि सुरैः कृतं यं (जिन-अभिषेकं) अवेक्ष्य के अति-भव्याः न मुमुदिरे ? सः जगत्-त्रितय-पावनः जिन-वर-अभिषेकः नः अ-शुभ-मयं, घन-अ-कोमलं मलं सदा विधुनोतु।

## શબ્દાર્થ

सुमेरु=મેરૂ.
गिरि=પર્વત.
मूर्धन=ટોચ, શિખર.
सुमेरुगिरिमूर्धनि=મેરૂ પર્વતની ટોચ ઉપર.
ध्वनत् (धा० ध्वन्)=શબ્દાયમાન.
अनेक=અનેક.
दिव्य=દિવ્ય, સ્વર્ગીય.
आनक=દુંદુભિ, વાદ્ય-વિશેષ.
ध्वनदनेकदिव्यानके=વાગી રહી છે અનેક દિવ્ય દુંદુભિઓ જ્યાં એવા.

---

૧ સરખાવો—

"रलयोर्डलयोश्चैव, शसयोर्बवयोस्तथा ।
वदन्त्येषां च सावर्ण्य-मलङ्कारविदो जनाः ॥"

सुरैः (मू० सुर)=દેવો વડે.
कृतं (मू० कृत)=કરેલ.
अवेक्ष्य( धा० ईक्ष्)=જોઇને.
यं (मू० यद्)=જેને.
मुमुदिरे (धा० मुद्)=હર્ષિત થયા, હર્ષ પામ્યા.
अति=અતિશય.
भव्य=ભવ્ય, મોક્ષે જનાર.
अतिभव्याः=અતિશય ભવ્ય, અલ્પસંસારી.
न=નહિ.
के (मू० किम्)=કોણ.
त्रितय=ત્રણનો સમુદાય.
पावन=પવિત્ર કરનાર.
जगत्त्रितयपावनः=ત્રણે લોકને પવિત્ર કરનારા.
अभिषेक=અભિષેક.
जिनवराभिषेकः=જિનેશ્વરોનો અભિષેક.
मलं (मू० मल)=મલને.
सः (मू० तद्)=તે.
विधुनोतु (धा० धा)=નષ્ટ કરો, દૂર કરો.
मय=પ્રચુરતાવાચક શબ્દ.
अशुभमयं (मू० अशुभमय)=અશુચિથી ભરપૂર.
घन=નિબિડ, ગહન.
कोमल=મૃદુ, કોમળ.
घनाकोमलं=નિબિડ તેમજ કઠણ.

## શ્લોકાર્થ

સકલ જિનેશ્વરોનો જન્માભિષેક—

"વાગી રહી છે અનેક દિવ્ય દુંદુભિઓ જ્યાં એવા [1]મેરૂ ગિરિરાજના શિખર ઉપર દેવતાઓ દ્વારા કરાયેલ જે ([2]અભિષેક)ને જોઇને કયા સુભવ્ય જીવો ખુશી ન થયા? (અર્થાત્ સર્વે પ્રમુદિત થયા) તે ત્રૈલોક્યને પવિત્ર કરનારો જિનેશ્વરનો અભિષેક આપણા અશુચિથી ભરપૂર, ગહન તેમજ કઠણ એવા (અષ્ટ [3]કર્મરૂપી) મલનો સદા નાશ કરો."—૧૦

✠ ✠ ✠ ✠

श्रीसिद्धान्तपरिचयः—

अपेतनिधनं धनं बुधजनस्य शान्तापदं
प्रमाणनयसंकुलं भृशमसदृशां तापदम् ।
जना ! जिनवरागमं भजत तं महासम्पदं
यदीप्सथ सुखात्मकं विगतकामहासं पदम् ॥ ११ ॥

—पृथ्वी

---

૧ મેરૂ પર્વતની માહિતી માટે જુઓ સ્તુતિ–ચતુર્વિંશતિકા (પૃ૦ ૩૩).

૨ જન્મ–અભિષેક એ તીર્થંકરના પાંચ કલ્યાણકો પૈકી 'જન્મ–કલ્યાણક' સાથે સંબંધ ધરાવે છે. એની સ્થૂલ રૂપરેખા સારૂ જુઓ સ્તુતિ–ચતુર્વિંશતિકા (પૃ૦ ૩૦–૩૩).

૩ કર્મનું યત્કિંચિત્ સ્વરૂપ સ્તુતિ–ચતુર્વિંશતિકા (પૃ૦ ૬–૭) માં આલેખેલું છે.

## टीका

जिनवरागमं भजत यूयम् । अपेतं-गतं निधनं-पर्यन्तो यस्य । शान्ता आपदो येन तम् । प्रमाणानि-प्रत्यक्षादीनि नया-नैगमादयः तैः संकुलम् । असन्तः-अशोभना दृश्यो येषां ते तथाविधानां तापदम् । महत्यः सम्पदो यस्मिन्नागमे तम् । यदि ईप्सथ सुखरूपं पदम् । किंभूतं ? विगतः कामहासो यस्मिन् पदं तत् ॥ ११ ॥

## अन्वयः

(हे) जनाः ! यदि सुख-आत्मकं विगत-काम-हासं पदं ईप्सथ, (तर्हि) अपेत-निधनं, बुध-जनस्य धनं, शान्त-आपदं, प्रमाण-नय-सङ्कुलं, असत्-दृशां भृशं ताप-दं, महत्-सम्पदं च जिन-वर-आगमं भजत ।

## શબ્દાર્થ

अपेत ( धा० इ )=દૂર થયેલ, નષ્ટ થયેલ.
निधन=અંત, નાશ.
अपेतनिधनं=દૂર થયો છે અંત જેનો એવા.
धनं ( मू० धन )=ધન, દોલત.
बुध=ડાહ્યો માણસ, પણ્ડિત.
जन=લોક.
बुधजनस्य=પણ્ડિત પુરુષોના.
शान्त ( धा० शम् )=શાન્ત થયેલ, નાશ પામેલ.
आपद्=કષ્ટ.
शान्तापदं=શાન્ત થઇ છે આપત્તિઓ જે દ્વારા એવા, નષ્ટ થયાં છે કષ્ટો જેથી એવા.
प्रमाण=પ્રમાણ, યથાર્થ જ્ઞાન.
नय=ખરેખરો અભિપ્રાય, નય.
सङ्कुल=મિશ્રિત, વ્યાપ્ત.
प्रमाणनयसङ्कुलं=પ્રમાણ અને નયો વડે વ્યાપ્ત.
भृशं=અત્યન્ત.
असत्=દુષ્ટ.
दृश्=દૃષ્ટિ.
असद्दृशां=મિથ્યા-દૃષ્ટિઓના.
ताप=સંતાપ.
दा=આપવું.
तापदं ( मू० तापद )=સંતાપ કરનારા.
जनाः ! ( मू० जन )=હે મનુષ્યો !
आगम=સિદ્ધાન્ત.
जिनवरागमं=જિનેશ્વરના સિદ્ધાન્તને.
भजत ( धा० भज् )=ભજો.
महत्=મોટી, ઘણી.
सम्पद्=સંપત્તિ, સંપદા.
महत्संपदं=મહાસંપત્તિ છે જેને વિષે એવા.
यदि=જો.
ईप्सथ ( धा० आप् )=તમે મેળવવા ઇચ્છો છો.
सुख=સુખ.
आत्मन्=આત્મા, સ્વરૂપ.
सुखात्मकं=સુખરૂપ.
विगत ( धा० गम् )=નષ્ટ થયેલ.
काम=કંદર્પ, કામદેવ, અનંગ.
हास=હાસ્ય.
विगतकामहासं=નષ્ટ થયાં છે કામ અને હાસ્ય જ્યાં એવા.
पदं ( मू० पद )=સ્થાનને.

## શ્લોકાર્થ

**શ્રીસિદ્ધાન્તનો પરિચય—**

"હે માનવો ! જો તમે સુખરૂપ તેમજ વિશેષતઃ ગયેલાં છે અનંગ અને હાસ્ય જ્યાંથી એવા ( અર્થાત્ વિષય-વાસના અને હાસ્યથી વિમુખ એવા ) ( મોક્ષરૂપી )



रोहिणीदेवी.

निर्वाणकलिकायाम्—

"तत्राद्यां रोहिणीं धवलवर्णां सुरभिवाहनां चतुर्भुजामक्षसूत्रबाणा-
न्वितदक्षिणपाणिं शङ्खधनुर्युक्तवामपाणिं चेति ।"

 

પદની અભિલાષા રાખતા હો, તો તો નષ્ટ થયો છે નાશ જેનો (અર્થાત્ અવિનાશી) એવા, વળી પણ્ડિત પુરૂષોના ધનરૂપ, તથા વળી શાન્ત થઇ છે આપત્તિઓ જે દ્વારા એવા, તેમજ (પ્રત્યક્ષાદિક) [1]પ્રમાણો અને (નૈગમાદિ) [2]નયો વડે વ્યાપ્ત એવા, તેમજ વળી [3]મિથ્યાદૃષ્ટિઓને અત્યંત સંતાપ-કારક અને સમ્યગ્દૃષ્ટિઓને મહાસંપત્તિયુક્ત એવા તે જિનેશ્વરના સિદ્ધાન્તને તમે ભજો."—૧૧

## સ્પષ્ટીકરણ

**પદ્ય-ચમત્કાર—**

આ પદ્યનાં પ્રથમનાં બે ચરણોમાંના છેવટના ચાર ચાર અક્ષરો સમાન છે, જ્યારે બાકીનાં બે ચરણોમાં તો છેવટના પાંચ પાંચ અક્ષરો સમાન છે. તેરમું પદ્ય પણ આવા પ્રકારના **યમક**થી વિભૂષિત છે, પરંતુ અત્ર વિશેષતા એ છે કે આ પદ્યનાં ચારે ચરણોમાં છેવટના બે બે અક્ષરો સમાન છે.

* * * *

**रोहिणीदेव्याः स्तुतिः—**

**शराक्षधनुशङ्खभृन्निजयशोवलक्षा मता**
**कृताखिलजगज्जनाहितमहाबलक्षामता ।**
**विनीतजनताविपद्द्विपसमृद्ध्यभिद्रोहिणी**
**ममास्तु सुरभिस्थिता रिपुमहीध्रभिद् 'रोहिणी' ॥१२॥३॥**

—पृथ्वी

## टीका

सुरभिस्थिता रोहिणी देवता रिपुपर्वतविदारिका ममास्तु । किंविशिष्टा ? शराक्षं धनुशब्द उकारान्तोऽप्यस्ति शङ्खान् बिभर्तीति । निजयश इव वलक्षा । मता-अभीष्टा । समस्तजगतां अहिता-वैरिणः तेषां महाबलानि तेषां कृता क्षामता यया सा । विनीतजनताया विपद एव हस्तिनस्तेषां समृद्धिघातका ॥ १२ ॥

### अन्वयः

शर-अक्ष-धनु-शङ्ख-भृत्, निज-यशस्-वलक्षा, मता, कृत-अखिल-जगत्-जन-अहित-महत्-बल-क्षामता, विनीत-जनता-विपद्-द्विप-समृद्धि-अभिद्रोहिणी सुरभि-स्थिता 'रोहिणी' मम रिपु-महीध्र-भिद् अस्तु ।

---

૧ પ્રમાણસંબંધી સ્થૂલ માહિતી ન્યાયવિશારદ ન્યાયતીર્થ મુનિશ્રી ન્યાયવિજયજીકૃત ન્યાયકુસુમાંજલિના તૃતીય સ્તબકમાંથી મળી શકશે.

૨ આ નયોના ટુંક સ્વરૂપ સારૂ જુઓ સ્તુતિ-ચતુર્વિંશતિકા (પૃ૦ ૧૮-૨૨).

૩ મિથ્યા-દૃષ્ટિઓના ભવ્ય અને અભવ્ય એમ બે મુખ્ય ભેદો છે. આ સંબંધમાં વિશેષ માહિતી માટે જુઓ તત્ત્વાર્થાધિગમસૂત્રના ૩૨ મા સૂત્ર ઉપરની ટીકા.

सूरिराह—

"दुंण्हंपि कवालचड्डुयं च काया विलुम्पंति ॥ १ ॥"

इति। आमः श्रुत्वा चमत्कृतः। अहो! सर्वज्ञपुत्रका एते ॥

अन्यदा कोऽपि चित्रकृद् भूपरूपं लिखित्वोपभूपं गतः। बप्पभट्टिना श्लाघिता तत्कला। नृपात् तेन टङ्ककलक्षं लेभे। लेप्यमयबिम्बचतुष्टयं कारितम्। एकं मथुरायां एकं मोढेरकवसतिकायां [अणहिलपुरे] एकं गोपगिरौ एकं सतारकाख्यपुरे। तत्र तत्र प्रतिष्ठाभावनाः कारिताः। अन्यदपि बह्वकारि ॥

अथामगृहे पुत्रो जातः सुलक्षणः। सोत्सवं तस्य दुन्दुक इति नाम प्रतिष्ठितम्। सोऽपि युवत्वे तैस्तैर्गुणैः पप्रथे। एकदा समुद्रसेनभूपाधिष्ठितं राजगिरिनामकं दुर्गं आमो रुरोध। अमितं सैन्यं कुद्दालादिसामग्री भैरवादयो यन्त्रभेदाः कृताः। प्राकारोऽतिबलेन प्रपातयितुमारेभे, नापतत्। आमः खिन्नः, तेन सूरयः पृष्टाः। अयमभ्रंलिहः प्राकारः कदाऽस्माभिर्गृहीष्यते?। सूरिर्बभाण—तव पुत्रपुत्रो भोजनामा अमुं प्राकारं दृक्पातमात्रेण पातयिष्यति, अन्यो नैव। आमस्त्यक्तारम्भः प्राकाराद् बहिर्द्वादशाब्दीमस्थात्। शत्रुदेशमात्मसाच्चक्रे। दुन्दुकगृहे पुत्रो जातस्तस्य भोज इति नाम ददौ। स जातमात्रो पर्यङ्किकान्यस्तो दुर्गद्वाराग्रमानीतः प्रधानैः, तद्दृक्प्रपातमात्रेण प्राकारः खण्डशो विशीर्णः। समुद्रसेनभूपो धर्मद्वारेण निःसृतः। आमो राजगिरिमविशत्, प्रजाभारो नारोपितः। अक्रूरा हि जैनराजर्षयः दयापरास्ते, रात्रौ आमाय राजगिर्यधिष्ठायकेन आभणितम्—राजन्! यदि त्वमत्र स्थास्यसि तदा तव लोकं हनिष्यामि। आमः प्रत्यूचे—लोकेन हतेन किं ते फलं? यदि हनिष्यसि तदा मामेव घातय। एतन्निर्भयमामवचः श्रुत्वा तुष्टो व्यन्तर उवाच—प्रीतोऽस्मि ते सत्त्वेन, याचस्व किंचित्, राज्ञोचे—न किमपि न्यूनं, केवलं कदा मे मृत्युः? ब्रूहीदम्। व्यन्तर उवाच—षण्मासावशेषे आयुषि वक्ष्यामि, पुनराययौ सः, राज्ञोक्तं कियन्मे आयुः, व्यन्तरो वदति—देव!

"गङ्गान्तर्मागधे तीर्थे, नावा वै तरतः सतः।
मकाराद्यक्षरग्रामो-पकण्ठे मृत्युरस्ति ते ॥ १ ॥"—अनु०

षण्मासान्त इति विद्याः, पानीयान्निर्गच्छन्तं धूमं यदा द्रक्ष्यसि तदा मृत्युर्ज्ञातव्यः। साधना च कार्या पारलौकिकी इति गदित्वा ततो देवो गतः। राजा प्रातः सूरिपार्श्वं गतः। सूरिरुवाच—राजन्! यद् व्यन्तरेण तवाग्रे कथितं आयुःप्रमाणं तत् तथैव, धर्मपाथेयं गृह्णीयाः। तदाकर्ण्य भूपस्तुतोष विसिष्मिये च। अहो ज्ञानमथवा विस्मयः एव कः? सूरः तेजस्वी, इन्दुराह्लादकः, गङ्गाम्भः पावनं, जैना ज्ञानिन इति ॥

दिनद्वये गते सूरिः श्रीआमस्य पुरः प्रसङ्गेन श्रीनेमिनाथस्याशीर्वादं पपाठ—

---

१-छाया—

द्वयोरपि कपालचाटुकं च काका विलुम्पन्ति ॥

"लावण्यामृतसारसारणिसमा सा भोगभूः स्नेहला
सा लक्ष्मीः स नवोद्गमस्तरुणिमा सा द्वारिका तज्जलम् ।
ते गोविन्द-शिवा-समुद्रविजयप्रायाः प्रियाः प्रेरकाः
यो जीवेषु कृपानिधिर्व्यधित नोद्वाहः स नेमिः श्रियै ॥ १ ॥–शार्दूल०

भूयः—

मग्नैः कुटुम्बजम्बाले, यैर्मिथ्याकार्यजर्जरैः ।
नोज्जयन्ते नतो नेमि–स्ते चेज्जीवन्ति के मृताः ? ॥ २ ॥"–अनु०

रैवतकतीर्थमहिमा सूरिभिर्व्याख्याय तथा पल्लवितो यथा भूमिमाहत्योत्थाय परिकरं बद्ध्वा सरभसं भूपः प्रतिशुश्राव–रैवतके नेमिमवन्दित्वा मया न भोक्तव्यं इति, लोकैर्निषिद्धः, मा मा, दूरे रैवतको गिरिः, मृदवो भवादृशाः । राजाऽऽह–प्रतिज्ञातं मे न चलति । ततः सह सूरिणा आमः सारसैन्यो रैवतकायाचालीत् । स स्तम्भतीर्थं यावद् गतः तत्र क्षुत्तापेन व्याकुलितोऽपि प्राणसन्देहं प्राप्तोऽपि नाहारमग्रहीत् । भीतो लोकः खिन्नः सूरिः, मन्त्रशक्त्या कूष्माण्डीं[1] शक्तिं साक्षादानिनाय, तदग्रे कथयामास–तत् कुरु येन राजा जेमति जीवति । तद्वचनात् कूष्माण्डी बिम्बमेकं महत् शिरसा बिभ्रती गगनेनामसविधं गता । ऊचे च–वत्स ! अहमम्बिका तव सत्त्वेन तुष्टा । गगने आगच्छन्तीं मां त्वं साक्षाददाक्षीः, मयेदं रैवतकदेशभूतदेवलोकशिखरान्नेमिनाथबिम्बमानीतं, इदं वन्दस्व, अस्मिन् वन्दिते मूलनेमिः वन्दित एवेति कुरु पारणकम् । सूरिभिरपि तत् समर्थितम्, लोकेन स्थापितं तद् बिम्बं वन्दित्वा राज्ञा ग्रासग्रहणं (कृतम्) । अद्यापि तद् बिम्बं स्तम्भतीर्थे पूज्यते । उज्जयन्त इति प्रसिद्धं तत् तीर्थं, हृद्यातोद्यानि ध्वानयन्नामो विमलगिरिं ऋषभध्वजं सोत्साहो वन्दित्वा यावद् रैवताद्रिं गतः तावत् तीर्थं दिगम्बरै रुद्धम्, श्वेताम्बरसङ्घः प्रवेष्टुं न लभते । आमेन तत् ज्ञात्वा ऊचे–युद्धं कृत्वा निष्पटान् हत्वा नेमिं नमिष्यामि, तावत् तद्दिगम्बरभक्ता एकादश राजानस्तत्र मिलिताः, सर्वे युद्धैकतानाः । तदा बप्पभट्टिः–स्थिरैः स्थेयं, एवं भूपं प्रतिबोध्य बप्पभट्टिरुपदिगम्बरं उपतद्भूपं च नरं प्रहित्यावभाण–इदं तीर्थं सद्योऽम्बिका दत्ते यस्य तस्य पक्षस्य सत्कमिति मन्ये, तैरुक्तं–युक्तं युक्तमेतत् । ततो बप्पभट्टिना सुराष्ट्रवास्तव्यानां श्वेताम्बरीयाणां दिगम्बरीयाणां च श्रावकाणां शतशः कन्या मेलिताः पञ्चसप्तवार्षिकाः, मिलिताः सभ्याः, बप्पभट्टिना अम्बादेवीपार्श्वात् कथापितं–यदि सर्वाः श्वेताम्बरश्रावककन्यका "उज्जिन्तसेलसिहरे"[2] इति गाथां पठिष्यन्ति तदा श्वेताम्बरीयं तीर्थं, पक्षान्तरे तु दैगम्बरीयं इति । तद् आनीता श्वेताम्बरबालिकाः, सर्वाभिः श्वेताम्बरपक्षश्रावकबालिकाभिः पठिता सा गाथा, अपरासु तु नैकयाऽपि; ततो जातं श्वेताम्बरसात्कं रैवतकं तीर्थम् । अम्बिकया स्वस्थया पुष्पवृष्टिः श्वेताम्बरेषु कृता । ततो दिक्पटसङ्घा महाराष्ट्रादिदक्षिणदेशानगमन् । राज्ञाऽन्यैरपि सर्वसङ्घैश्चिरात् तत्र मिलितैर्नेमिस्तत्र नेमे,

१ अम्बिकेत्यपरनाम्नी देवी । २ उज्जयन्तशैलशिखरे ।

वित्तं ददे, प्रभासे चन्द्रप्रभः प्रणेमे, वन्दिमोक्षः सर्वत्रापि कारितः, आमस्य भुक्तौ तदा गुर्जरादिदेशाः, तीर्थादीनां चिरं पूजोपयोगिनो ह्रदा(हट्टा?)द्याघाटाः प्रक्लृप्ताः । एवं कार्याणि कृत्वा सूरिनृपौ गोपगिरिं प्राविशताम् । सङ्घपूजादिमहास्तत्र नवनवाः । प्राप्तप्राये काले दुन्दुको राज्ये प्रतिष्ठितः, आपृष्टः सः, लोकोऽपि क्षमितः, अनृणो देशः कृतः । सह सूरिणा नावारूढो गङ्गासरित्तीरे तीर्थं मागधं गतः । तत्र जले धूमं दृष्टवान् तदा सूरीन्द्रं क्षमयन् संसारमसारं विदन्ननशनमगृह्णीत समाधिस्थः । श्रीविक्रमकालाद् अष्टशतवर्षेषु नवत्यधिकेषु व्यतीतेषु भाद्रपदशुक्लपञ्चम्यां पञ्चपरमेष्ठिनः स्मरन् राजा दिवमध्यष्ठात् । सूरयस्तत्त्वज्ञा अपि तदा रुरुदुः । चिरप्रीतिमोहो दुर्जय एव । सेवकास्तु चक्रन्दुः—हा शरणागतरक्षावज्रकुमार ! हा राजस्थापनाद्दाशरथे ! हा अश्वदमननल ! हा सत्यवाग्युधिष्ठिर ! हा महा-(हेम)दानकर्ण ! हा मज्जैनतत्त्वश्रेणिक ! हा सूरिसेवासम्प्रते ! हा अनृणीकरणविक्रमादित्य ! हा वीरविद्यासातवाहन ! अस्मान् विहाय क्व गतोऽसि ? दर्शयैकदाऽस्मभ्यमात्मानं, मैकाकिनो मुञ्च । एवं विलपन्तस्ते सूरिभिः प्रतिबोधिताः—भो भो सत्यं दैवेन पापेन

"आलब्धा कामधेनुः सरसकिसलयश्चान्दनश्चूर्णितो हा
छिन्नो मन्दारशाखी फलकुसुमभृतः खण्डितः कल्पवृक्षः ।
दग्धः कर्पूरखण्डो घनहतिदलिता मेघमाणिक्यमाला
भिन्नः कुम्भः सुधायाः कमलकुवलयैः केलिहोमः कृतोऽयम् ॥१॥"—स्रग्०

तथा मा शोचत शोचत, यतः—

"पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सृज्य नैशं तमः
कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा ।
मध्याह्ने सरितां जलं प्रसृमरैरापीय दीप्तैः करैः
सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत् ? ॥ १ ॥"—शार्दूल०

इति लोकं निःशोकं कृत्वा लोकेन सह सूरिर्गोपगिरिमगात् ।

सूरिभिः दुन्दुको नाम राजा आमशोकेन जात्यमुक्ताफलस्थूलानि अश्रूणि समुद्गिरन् हिमम्लानदीनवदनः समुल्लसच्चिन्ताचान्तस्वान्तो बभाषे—राजन् ! कोऽयं महतस्तव पितृशोकः ? स हि चतुर्वर्गं संसाध्य कृतकृत्यो बभूव, यशोमयेन देहेन च आचन्द्रार्कं जीवन्नेव(आस्ते) । सुपुण्यलक्ष्मीकीर्तिलक्ष्म्यौ चेति द्वे नरस्योपकारिण्यौ वल्लभे ।

"पुण्यलक्ष्म्याश्च कीर्तेश्च, विचारयत चारुताम् ।
स्वामिना सह यात्येका, परा तिष्ठति पृष्ठतः ॥ १ ॥"—अनु०

अन्योऽपि कोऽप्येवंविधो भवतु इत्येवंविधाभिर्वाग्भिर्दुन्दुकराजं सूरिराजो निशोकमकार्षीत् । दुन्दुकः शनैः शनैः परमार्हतोऽभूत् । राजकार्याण्यकार्षीत् । त्रिवर्गं समासेविष्ट । एवं वर्तमाने काले दुन्दुकश्चतुष्पथेऽगच्छत्, कण्दिकां नाम गणिकामुदाररूपां [त्रिद्रूपां]

युवजनमृगवागुरां मदनमायामयीमालोकिष्ट, तां शुद्धान्तस्त्रीमकार्षीत्। तया ढुन्ढुकस्तथा वशीकृतो यथा यदेव सा वदति तत् सत्यम्, यदेव सा करोति तदेव हितं मनुते। सा तु कार्मणकारिणी वाक्पटुः सर्वं राज्यं ग्रसति हिमानीव चित्रं, भोजमातरं पद्मां नाम अन्या अपि राज्ञीरन्वयवतीर्विनयवतीर्लावण्यवतीस्तृणाय मनुते ॥

एकदा कलाकेलिर्नाम ज्योतिषिको निशि विसृष्टे सेवकजने ढुन्ढुकराज्यं विजनं दृष्ट्वाऽवादीत्-देव! वयं भवत्सेवकत्वेन सुखिनः श्रीशाः, अतो यथातथं ब्रूमः। अयं ते भोजनामा तनयो भाग्याधिकस्त्वां हत्वा तव राज्ये निवेक्ष्यते, यथार्हं स्वयं कुर्वीथाः। राजा तदवधार्य वज्राहत इव क्षणं मौनी तस्थौ। ज्यौतिषिकं विससर्ज। सा वार्ता भोजजननीसहचर्यां दास्यैकया विपुलस्तम्भान्तरितया श्रुता भोजमात्रे च उक्ता, सा पुत्रमारणाद् बिभाय। राजाऽपि कण्टिकागृहमगात्। साऽपि राजानं सचिन्तमालोक्याभाणीत्-देव! अद्य कथं म्लानवदनः?। राजाऽऽह स्म-किं क्रियते? विधिः कुपितः, पुत्रान्मे मृत्युर्ज्ञानिना दृष्टप्रत्ययशतेनोक्तः। कण्टिका वदति स्म-का चिन्ता? मारय पुत्रम्। सुतमपि निर्दलयन्ति राज्यलुब्धाः, सुतो न सुतः, सुतरूपेण शत्रुरेव सः। तद्वचनात् ढुन्ढुकः सुतं जिघांसयामास। यावता घातयिष्यति तावता भोजमात्रा पाटलीपुरे स्वभ्रातॄणां शूराणां राज्यश्रीस्वयंवरमण्डपानां स्नेहलानां धर्मज्ञानामग्रे प्रच्छन्नलेखेन ज्ञापितं यथा—एवं एवं भवतां भागिनेयो विनंक्ष्यति, राजा रुष्टः, आगत्य एनं गृहीत्वा गच्छत, रक्षत जीववत्, मा स्माहं भवत्सु जीवत्सु निष्पुत्राऽभूवमिति। तेऽप्यागच्छन्, ढुन्ढुकमनमन्, उत्सवमिषेण भागिनेयं भोजं गृहीत्वा पाटलिपुरमगमन्, तत्र तमपीपठन्, अलीललन्, शस्त्राभ्यासमचीकरन्। यावन्नवमं वर्षं[1] तत्र तस्य पञ्चाष्टदिनैः कतिभिरप्यूनं[2]मतिक्रामति स्म, कण्टिका ढुन्ढुकं विज्ञपयति स्म—देव! पुत्ररूपः शत्रुस्ते मातृशाले वर्धते, नखच्छेद्यं परशुच्छेद्यं मा कुरु, अत्रानीय छन्नं यमसदनं नय। राजाऽऽह—सत्यमेतत्। ततो दूतमुखेन ढुन्ढुको भोजं तन्मातुलपार्श्वेऽयाचीत्। ते भोजं नार्पयन्ति। पुनः पुनः प्राह, दूतान् ढुन्ढुकः प्रहिणोति। भोजमातुलाः प्राहुः—राजन्! वयं तव भावं विद्मः। नार्पयामः। विधर्मपात्रमसौ। अन्योऽपि शरणागतो रक्ष्यः क्षत्रियैः, किं पुनरीदृग् भगिनीपुत्रः? बलात्कारं ब्रूषे चेद् युद्धाय प्रगुणीभूयाः। वयं भगिनीपतये चमत्कारं दर्शयिष्यामः। तद्दूतैरागत्योक्तः ढुन्ढुकः कुपितोऽपि तान् हन्तुं न क्षमः। भोजोऽपि तैः पितुर्दुष्टत्वं ज्ञापितः कवचहर उपपितृ नैति। ततो ढुन्ढुकेन बप्पभट्टिसूरयः प्रार्थिताः-यूयं गत्वा भोजं सुतमनुनीयानयत, मानयत माम्। अनिच्छन्तोऽपि तत्सैनिकैः सह पाटलीपुत्रं चेलुः। अर्धमार्गं संप्राप्ताः। स्थित्वा विमृष्टं ज्ञानदृशा-भोजस्तावन्मम वचसा नृपसमीपं नैष्यति, आनीयते वा यथा तथा तदाऽऽनीतोऽपि पित्रा हन्येत, वाग्लङ्घने राजाऽपि क्रुद्धो मां हन्ति, तस्माद् 'इतो व्याघ्र इतो दुस्तटी'ति न्यायः प्राप्तः, साम्प्रतं च

१ 'जीवन्नवमंवत्स। तत्र तस्य पञ्चाब्दी दिनैः' इति-पाठान्तरम्। २ 'नातिक्र०' इति पाठः।

ममायुः दिनद्वयमवशिष्यते, तस्मादनशनं शरणमिति विमृश्यासन्नस्था यतयो भाषिताः—नन्नसूरिगोविन्दाचार्यौ प्रति हितं ब्रूयात। श्रावकेभ्योऽपि मिथ्या दुष्कृतं ब्रूयात। परस्परममत्सरतामाद्रियध्वम्, क्रियाः पालयत, वालवृद्धान् लालयत। न वयं युष्मदीयाः, न यूयमस्मदीयाः। सम्बन्धाः कृत्रिमाः सर्वे। इति शिक्षयित्वाऽनशनस्थाः शमताप्रपन्नाः।

"अर्हतस्त्रिजगद्वन्ध्यान्, सिद्धान् विध्वस्तवन्धनान्।
साधूंश्च जैनधर्मं च, प्रपद्ये शरणं त्रिधा॥ १॥—अनु०
महाव्रतानि पञ्चैव, षष्ठकं रात्रिभोजनम्।
विराधितानि यत् तत्र, मिथ्यादुष्कृतमस्तु मे॥ २॥"—अनु०

इति ब्रुवाणा आसीना अदीनाः कालमकार्षुः। श्रीवप्पभट्टिसूरीणां श्रीविक्रमादित्यादष्टशतवर्षेषु ( सं० ८०० ) गतेषु भाद्रपदशुक्लतृतीयायां रविदिने हस्तर्क्षे जन्म, पञ्चनवत्यधिकेषु( सं० ८९५ ) गतेषु स्वर्गारोहणं, तदैव मोढेरके नन्नसूरीणामग्रे भारत्योक्तं—अभवद्गुरव (रुवान्धवा?) ईशानदेवलोकं गताः। तत्र वाढं शोकः प्रससार।

"शास्त्रज्ञाः सुवचोऽन्विता वहुजनस्याधारतामागताः
सद्वृत्ताः स्वपरोपकारनिरता दाक्षिण्यरत्नाकराः।
सर्वस्याभिमता गुणैः परिवृता भूमण्डनाः सज्जनाः
धातः! किं न कृतास्त्वया गतधिया कल्पान्तदीर्घायुषः?॥१॥"—शार्दूल०

वृद्धैस्तु प्रवोधो दत्तः—

"हित्वा जीर्णं नवं देहं, लभते भो पुनर्नवम्।
कृतपुण्यस्य मर्त्यस्य, मृत्युरेव रसायनम्॥ १॥"—अनु०

इति॥

डुन्दुकेन सूरिभिः सह प्रहिताः सैनिकास्ते व्यावृत्य डुन्दुकपार्श्वं गताः। सोऽपि पश्चात्तापानलेन दन्दह्यते स्म। भोजेनापि समातुलेन सूरिशिष्याणामन्येषामपि लोकानां मुखादवगतं यत् सूरय एवमर्थं तव पार्श्वं नाजग्मुः—मा स्मायमस्मदुपरोधशङ्काक्षुब्धचित्तः पितुः पार्श्वंगतो मर्तेति कृपां दधुः। तदेतदाकर्ण्य भोजस्तथा पीडितो यथा वज्रपातेनापीड्यते, पितुरन्तिकं नागादसौ। एकदा मालिकः कश्चित् पूर्वमामराजभृत्यो विदेशे भ्रमित्वा भोजान्तिकमाययौ पाटलीपुरे। तेनोक्तम्—देव! त्वमस्मत्स्वामिकुलप्रदीपः, मया विदेशे सद्गुरोर्मुखाद् विद्यैका लब्धा मातुलिङ्गी नाम, ययाऽभिमन्त्रितेन मातुलिङ्गेन हताः करिहरिप्राया अपि वलिनो म्रियन्ते, मानवानां तु का कथा? देव! गृहाण त्वम्। भोजेन सा तस्मादादत्ता, प्रमाणिता, सत्या, चिन्तितकृत्। मालिको दानमानाभ्यां भोजेन रञ्जितः। मातुलाः सर्वे भोजेन विद्याशक्तिं प्रकाश्य तोषिताः। ते ऊचुः—यदीयं ते शक्तिस्तदा प्राभृतमिषेण मातुलिङ्गानि गृहीत्वा अस्माभिः सह पितुः समीपं व्रज। पितरं निपात्य राज्यं गृहाण। तद् रुरुचे भोजाय, चलितो वहुमातुलिङ्गशाली सन्, गतः पितु-

द्वारं, कथापितं च—तात! त्वं पूज्योऽहं शिशुः, त्वत्तो मरणं वा राज्यं वा सर्वं रम्यं मे। राजा संतुष्टः, अहो विनीतः सुत आयातु इति विमृश्य आहूतो भोजः, सोऽपि ततो मध्यमागतः, एकासनस्थौ कण्टिकाराजौ मातुलिङ्गेन जघान, सम्यग् विद्या नान्यथा। उपविष्टो दुन्दुकराज्ये भोजः। तन्मातुला अतुल्यं तोषं दधुः। माता पद्मा प्रससाद। दुन्दुकेन धनहरणग्रासोद्दालादिना दूनचरा राजन्यकाः पुनर्जातमात्मानं मेनिरे। महाजनो जिजीव, वर्णाः सर्वे उन्मेदुः। संसारसरोऽम्भोजं भोजं कमला भेजे। दोर्वलात् परिच्छदवलाच्च जगज्जिगाय ॥

अथ कृतज्ञतया मोढेर(क)पुरे नन्नसूरये विज्ञप्तिं दत्त्वा उत्तमनरानप्रैषीत्। ते गतास्तत्र, विज्ञप्तिर्दर्शिता, तैस्तत्र वाचिता नन्नसूरिगोविन्दाचार्याद्यैर्यथा—स्वस्ति श्रीमोढेरे परमगुरुश्रीनन्नसूरिगोविन्दसूरिपादान् गोपगिरिदुर्गात् श्रीभोजः परमजैनो विज्ञापयति यथा—इह तावत् प्रज्ञागङ्गाहिमाद्रयः सामाचारीनारीसौभाग्यवर्धनमकरध्वजाः क्षितिपतिसदःकुमुदिनीश्वेतदीधितयो भारतीधर्मपुत्राः श्रीवप्पभट्टिसूरयस्त्रिदिवलोकलोचनलेह्यललितपुण्यलावण्यतामादधिरे, तत्स्थाने सम्प्रति दीर्घायुषो यूयं स्थ। इत्थैतां विज्ञप्तिं प्रमाणेनात्र पादा अवधार्याः, (तद्) दृष्ट्वा भक्तिरहस्यं सूरयः ससङ्घाः सुतरां जहृषुः, सङ्घानुमत्या गोविन्दाचार्यं मोढेरके मुक्त्वा श्रीनन्नसूरयो गोपगिरिमसरन्। भोजः पादचारेण ससैन्यः संमुखमायातः, गुरोः पादोदकं पपौ। उल्लसत्तृष्णो गिरं शुश्राव। स्थानस्थानमिलितजनहृदयसंघट्टचूरितहारिहारमौक्तिकधवलितराजपथं पुरं निनाय, सिंहासने निवेशयामास (तान्)। ततः मङ्गलं चकार नान्दीध्वनिः उत्सवाः नर्तनं आनन्दः तदानन्दमयो वभूव, तदादेशान् शुश्राव, तद्भक्तानात्मवद् अदर्शत्, मन्तुयुक्तान् विषवदीक्षांचक्रे। तदुपदेशाज्जिनमण्डितां मेदिनीं विदधे। दुन्दुकस्य तादृग् मरणं स्मृत्वा कुपथेषु न रेमे। मथुराशत्रुञ्जयादिषु यात्रां चकार। एकादशव्रतानुचरणपूर्वं राजर्षेर्यशांसि उद्धार, चिरं राज्यं चकार। इत्येवं गोपगिरौ भोजो धर्मं लालयामास, प्रजाः पालयामास, उदियाय च। अन्यैरपि पुण्यपुरुषैरेवं भाव्यम्[१] ॥

॥ इति श्रीवप्पभट्टिसूरिचरित्रं[२] समाप्तम् ॥



१ प्रतिप्रान्तेऽयमुल्लेखः—

महोपाध्यायश्रीसकलचन्द्रशिष्यमहोपाध्यायश्रीशान्तिचन्द्रशिष्यगणिरतिचन्द्रेण लिपीकृतं (उदेपुरात् सार्धक्रोशे) देवालीनगरे। ग्रन्थाग्रं ५५१ वप्पभट्टिचरित्रम् ॥ ॥ शुभं भवतु ॥ संवत् १६५१ वृषे (वर्षे) ॥

२ इदं चरित्रं श्रीराजशेखरसूरिप्रणीतचतुर्विंशतिप्रबन्धस्यैकतमः प्रबन्ध इति मुद्रितपुस्तकदर्शनेन तदनुपादावलोकनेन च प्रतिभाति।

# पाठान्तराणि

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| १ | १४ | तस्यामन्त्रणे | तस्यामन्त्रणम् |
| १ | १४ | कचित् डः | कचित् डप्रत्ययः |
| १ | १६ | ०नान्त्यस्य लोपः | ०नान्त्यस्वरलोपः |
| १ | १६ | ०दिकः पापवर्गों | ०दिकवर्गों |
| १ | १७ | तस्यामन्त्रणे | तस्यामन्त्रणम् |
| ६ | ११ | नवरै | नेन्द्रै |
| ८ | १२ | रतः | रतः—सक्तः |
| ९ | ३० | भवर्णात् पातु | भवर्णात् नुः—पुरुषस्य पातु |
| ९ | ३१ | मध्यवर्तिनं | मध्ये वर्तिनं |
| १२ | ५—६ | | तृतीयचतुर्थचरणयोः पूर्वापरीभावः |
| १२ | ९ | स जिनाजितः | जिनाजितः सः |
| १२ | १० | त्रिजगद्भिः | त्रिजगद्भिरपि |
| १३ | २५ | शरणा० | चरणा० |
| १४ | २ | किंविधान् | किंविशिष्टान् |
| १४ | ३ | शेषाद्विभापा | शेषाद्वा |
| १७ | ४ | यया | यया सा |
| १८ | १० | श्रमरहितया | अश्रमया—श्रमरहितया |
| २४ | २ | शान्ता | विद्वज्जनस्य धनं, शान्ता |
| २५ | १५ | कृताखिलजगज्जनाहित० | समस्तजगतां कृताऽहित० |
| २५ | २० | सुरभिस्थिता | सुरभिस्थिता—गोस्थिता |
| २५ | २१ | विभर्तीति | विभ्रती |
| ३४ | १० | समीरम् | वायुम् |
| ३५ | १८ | निवहः | निवहस्तीर्थकृताम् |
| ३५ | १८ | भवोदधौ | भवोदधौ—संसारसमुद्रे |
| ३५ | २० | वितरतु | वितरतु—विस्तारयतु |
| ३६ | १८ | अतीव शिवा | अतिशयेन शिवा—कल्याणी शिवहेतुत्वात् |
| ३७ | १० | कनकच्छविं | कनकरुचिं |
| ४३ | १७ | अहिता—वैरिणः | अहिता एव वैरिणः |

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| ४३ | १८ | बहुप्रकारैः | बहुधा—बहुप्रकारैः |
| ४५ | ७ | नित्यं सौख्यं | अतिसौख्यं |
| ४५ | ९ | भवत्येव चेति | भवत्येवेति |
| ५२ | २३ | यस्मिन् | यस्मिंस्तम् |
| ५४ | ४ | घातका | घातुका |
| ५४ | १० | घातकानां | घातुकानां |
| ६४ | ९ | अतीष्टा | अभीष्टा |
| ८७ | ७ | पद्मं हस्ते यस्याः सा | अस्य स्थानं 'हस्तिकाय'पदस्य पूर्वे |
| ९२ | १६ | यस्याः | यस्यां |
| ९४ | १३ | घस्मरः | स एव विशिष्टो घस्मरः |
| ९९ | ६ | यया | यया सा |
| १०० | १० | सा | ० |
| १०३ | २७ | तुशब्दश्चार्थे | तुशब्दः पुनःशब्दार्थे |
| १०९ | २१ | जगता | बाहुभ्यो जगता |
| ११७ | ३० | गुरूत्सवानां | उत्सवानां |
| १२९ | ९ | अरहितापश्चासौ | अरहिता—अत्यक्ता आपो—जलं येन सोऽरहितापश्चासौ |
| १३१ | १६ | वर्धने | वर्धमाने |

१३२ २५ टीकान्तरम्—श्रुतं—ज्ञानं तस्य निधिः तद्विषयं ईशितुं शीलं यस्याः सा तथोक्ता तत्संबोधनं हे श्रुतनिधीशिनि स्वामिनि ! बुद्धिरेव वनावली तस्या दवो बुद्धिवनावलीदवस्तं बुद्धिवनावलीदवं अज्ञानलक्षणम् । तथा भवः—संसारस्तस्माद् भियो—भयानि तासां पदं—स्थानं हे देवि ! आदरात्—प्रयत्नात् ममैतत् सर्वं हर—अपनयेति सम्बन्धः । तथा अवमं—पापं नुदति—प्रेरयति या सा तत्संबोधनं अवमनुत् । किंभूतं पदम् ? 'रचितापदं' रचिता—विहिता आपद् येन तत् तथोक्तम् । केन हेतुभूतेन ? तमसा—अज्ञानेन । किंविशिष्टेन तमसा ? 'अनुत्तमसारचिता' अनुत्तमं—अनिकृष्टं पाराहिकं यद् वस्तु तस्य सारः अनुत्तमसारस्तं चिनोति—वृद्धिं नयतीति अनुत्तमसारचित् तेन । कदाचिदिदं विशेषणं भगवत्याः क्रियते । हे देवि ! किंविशिष्टा त्वम् ? । न विद्यते उत्तमा उत्कृष्टा यस्याः सा 'अनुत्तमा' । सारो—बलं तेन चिता—व्याप्ता सारचिता । सा अनुत्तमा सारचितेति गतार्थम् ॥ ८० ॥

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| १३७ | ८ | अवत् | अवत्—रक्षत् |
| १४० | १० | तां | त्वं |
| १४१ | २० | नुताः | नुताः—स्तुताः |
| १४२ | ३० | पात—रक्षत इति क्रिया | पात—अपितु पिवत |
| १५० | १० | यत्र तस्मिन् | यस्मिन् |
| १५० | १२ | अवरा | अह्रानयो—ह्रानिरहिता घना यत्र । अवरा |
| १५२ | २० | निर्धा(दा)रणे | निर्दारणे |
| १६० | | स्पष्टं | निर्मलम् |
| १६२ | २३ | काव्यान्तेऽयमुल्लेखः— | |

इति श्रीचतुर्विंशतिजिनस्तुतयः कृता बप्पभट्टिसूरिभिः ॥

| | | | |
|---|---|---|---|
| १८७ | ५ | पाटलिपुरे | पाटलापुरनगरे |
| १८७ | ६ | नमस्कारकरणाय | नमस्करणाय |
| ,, | ७ | मोढेरकपुर० | मोढेरपुर० |
| ,, | ७ | चात्माराम० | रात्रावात्माराम० |
| ,, | ९ | प्रभाते च | प्रातः |
| ,, | १० | द्र(द्रु) | द्रु |
| ,, | १२ | सपरिच्छदाः | प्रचुरपरिच्छदाः |
| ,, | १२ | हन्तुं | हन्तुमहं |
| ,, | १५ | ०त्रागतः | ०त्र समागतः |
| ,, | १७ | आलापितः—वत्स ! | आलेपे—वत्सक ! |
| ,, | १८ | ०यस्तुष्टिं न मन्यन्ते | ०यस्तृप्तिं न तन्वते |
| ,, | १९ | करप्राप्यानि | चयप्राप्यानि |
| ,, | १९ | लक्षणसाहित्यादीनि | लक्षणतर्कसाहित्यादीनि |
| ,, | २० | आगतौ | वन्दितुमागतौ |
| ,,* | २३ | भवतितीर्षुः | भवं तितीर्षुः |
| ,, | २४ | मत्कुलतन्तुः | नः कुलतन्तुः |
| ,, | २४ | उदितम् | गदितम् |

* एकस्मिन्नेव पृष्ठे इयन्ति पाठान्तराणि मयोपलब्धानि श्रीहेमचन्द्राचार्यग्रन्थावल्यां विंशतितमाङ्के ग्रन्थे मुद्रिताद् श्रीराजशेखरसूरिकृतचतुर्विंशतिप्रबन्धात् । अत इदं कार्यं कियत्परिश्रमजन्यं तज्जानाति विद्वानेव । ततोऽतः परं प्रायः संदिग्धस्थलेषु पाठान्तराणि मया दीयन्ते ।

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| १८७ | २६ | बुद्धिः प्रलयं | बुद्धिर्विलयं |
| १८८ | १३ | यशोधर्मं | यशोवर्मं |
| १८८ | १८ | स्वनामादि (म साक्षात्) ब्रुवते | स्वनाम नामाददते |
| १८९-९० | | (त्वया निर्वासिता, सपुत्रा समानीयतां, राज्ञा तुष्टाऽऽनीता) | तदा देवेन सपत्नीवचसा निष्कासिता सा प्रत्यानीयत। राज्ञा सा स्वसौधमानायिता सपुत्रा गौरविता च। |
| १९६ | १६-१८ | (सूरिभिर्धर्मनृपो गोपगिरिगमनाय पृष्टः, धर्मेण प्रतिज्ञा स्मारिता, सूरिभिस्तत्पूर्त्तिः स्थगीधररूपेणामागमनेनोक्ता, प्रधानजनः) | सूरीश्वरो विलम्बाय प्रहरद्वयं कामपि कथामचीकथत्। रसावतारः स कोऽपि जातो यो रम्भातिलोत्तमाप्रेक्षणीयकेऽपि दुर्लभः। आमो राजाऽमूल्यं कङ्कणं ग्रहणके मुक्त्वा वेश्यागृहे उषित आसीत्। सा तु लक्षणापतेर्वारस्त्री। एकं कङ्कणमामो राजद्वारे मुञ्चन्नगात्। अपराह्णे राज्ञः पार्श्वाद् बप्पभट्टिसूरिभिर्मुत्कलापितम्—देव! गोपगिरावामपार्श्वे यामः, अनुज्ञां दीयताम्। धर्मेण भणितम्—भवतामपि वाणी विघटते, भवद्भिर्भणितमभूत्—यदा तव दृष्टौ आमः समेत्यास्मानाह्वयति, तदा यामो नार्वाक्। तत् किं विस्मृतम्?। जिह्वे किं वो द्वे स्तः?। आचार्या जगदुः—श्रीधर्मदेव! मम प्रतिज्ञा पूर्णा। राजाऽऽह—कथम्?। सूरिर्वदति—आमो राजाऽत्र स्वयमागतस्तव दृष्टौ। राजाऽऽह—कथं ज्ञायते?। सूरिः—यदा भवद्भिः पृष्टं—भवतां स्वामी कीदृशः? विशिष्टैस्तदा भणितम्—स्थगिकाधररूपः, तथा 'बीजउरा' शब्दोऽपि विमृश्यताम्, 'दोरा' शब्दोऽपि यो मयोक्तोऽभूत्, तस्मात् प्रतिज्ञा पूर्णा मे। अत्रान्तरे केनापि राजद्वारादामकङ्कणं नृपधर्महस्ते दत्तमामनामाङ्कितम्। द्वितीयं वेश्यया दत्तम्। तद् दृष्ट्वा नष्टसर्वस्वस्तद्(?)न इव शुशोच—धिङ् मां यन्मया शत्रुः स्वगृहमायातो नार्चितो न च साधितः। धर्मेण मुत्कलिताः सूरयः पुरः क्वापि स्थितेनामेन सह जग्मुः। मार्गे गच्छता आमेन पुलीन्द्र एको जलाशयमध्ये जलं छगलवन्मुखेन पिबन् दृष्टः। आमराजेन सूरीणामग्रे एत्योक्तम्—"पसु जिम पुलिंदउ पउ मीयइ पंथिउ कवणिण कारणिण" |

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| | | | सूरिभिरभाणि—"कर वेवि करंविय कज्झलिण मुद्दहु-अंसु निवारणिण"। राज्ञा प्रत्ययार्थं स समाकार्य० । |
| १९६ | २४ | वप्पभट्टे (टे)! प्रयत्नात् | वत्सक! वप्पभट्टे! |
| १९९ | २९ | (भणितः) | पृष्टः |
| | १३ | सद्रथा (प्लवाः) | सवरूथा |
| २०१ | ३ | व्यशि(श्रि)यत् | व्यशिश्रणत् |
| २०१ | ८-९ | (श्रुत्वा० प्रसङ्गगतान्) कामाक्तान् रागवादान् | मोढेरकपुरे स्तः । गुणोत्कण्ठयाऽमितसैन्य आमस्तत्र गतः । तदा नन्नसूरिर्व्याख्यानेऽवसरायातान् वात्स्यायनोक्तान् कामाङ्गभावान् |
| २०१ | २५ | शम्नड(ञ?) | शम्नञा० |
| २०३ | १८ | सांकल्पिकं मद(द)ज्जनं— | सांकल्पिकमिदं जनं— |
| २०४ | १ | घातयामि । एवं प्र(टल) | अथवा ज्ञातम्—सर्वजनसमक्षं पापमुद्रीयं काष्ठानि भक्षयामि । एवं टल० |
| २०४ | १० | परेषां(रमां) | परमरेखां |
| २०६ | १६-१७ | ( वहुप्रार्थनेऽपि० दत्ता ) | मुनिर्नेच्छति ताम् । तया मुनये पादतलप्रहारे दीयमाने नूपुरं मुनिवरचरणे प्रविष्टं काकतालीयन्यायेन अन्धवर्त्तकीन्यायाच्च । राजा तद् दृष्ट्वा सूरये समस्यां ददौ |
| २०६ | १८ | कमाडसासज्ज | कवाडमासज्ज |
| २०८ | १८ | (कृतम्) | चक्रे |



# स्पष्टीकरणसाधनीभूतग्रन्थानां सूची

(સ્પષ્ટીકરણમાં સાધનરૂપ ગ્રન્થોની સૂચી)

| जैनग्रन्थाः | कर्तारः |
|---|---|
| सिद्धहेमशब्दानुशासनम् | कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिः |
| अभिधानचिन्तामणिः | ,, |
| त्रिषष्टिशलाकापुरुषचरित्रम् | ,, |
| अयोगव्यवच्छेदद्वात्रिंशिका | ,, |
| स्तुतिचतुर्विंशतिका | श्रीशोभनमुनीश्वरः |
| श्रीचतुर्विंशतिजिनानन्दस्तुतयः | मुनिवर्यश्रीमेरुविजयः |
| स्तोत्ररत्नाकरस्य द्वितीयो विभागः | प्रकाशयित्री—श्रीयशोविजयजैनग्रन्थमाला |
| भक्तामरस्तोत्रम् | श्रीमानतुङ्गसूरिः |
| न्यायकुसुमाञ्जलिः | न्यायविशारद—न्यायतीर्थ—मुनिश्रीन्यायविजयः |
| अध्यात्मतत्त्वालोकः | ,, |
| स्थानाङ्गम् | गणधरः |
| तत्त्वार्थाधिगमसूत्रम् | वाचकवर्यश्रीउमास्वातिः |
| आचारदिनकरः | श्रीवर्धमानसूरिः |
| निर्वाणकलिका | श्रीपादलिप्तसूरिः |
| जम्बूद्वीपप्रज्ञप्तिः | गणधरः |
| जम्बूद्वीपप्रज्ञप्तिवृत्तिः | जगद्गुरुश्रीविजयहीरसूरिः |
| प्रवचनसारोद्धारः | श्रीनेमिचन्द्रसूरिः |
| विचारसारप्रकरणम् | श्रीप्रद्युम्नसूरिः |
| नयरहस्यम् | न्यायविशारद-न्यायाचार्य-महामहोपाध्याय-श्रीयशोविजयः |
| ऐन्द्रस्तुतिः | ,, |
| मार्गद्वात्रिंशद्द्वात्रिंशिका | ,, |
| प्रमाणनयतत्त्वालोकालङ्कारः | श्रीवादिदेवसूरिः |
| सप्तभङ्गीतरङ्गिणी | श्रीविमलदासः |
| सप्तभङ्गीप्रकरणम् | |
| धर्मकल्पद्रुमः | आगमिकश्रीउदयधर्मगणिः |

| जैनग्रन्थाः | कर्तारः |
| --- | --- |
| सुबोधिका ( कल्पसूत्रवृत्तिः ) | उपाध्यायश्रीविनयविजयः |
| शान्तसुधारसः | ,, |
| लोकप्रकाशः | ,, |
| इन्द्रियपराजयशतकम् | |
| सिन्दूरप्रकरः | श्रीसोमप्रभसूरिः |
| वीरभक्तामरम् | उपाध्यायश्रीधर्मवर्धनगणिः |
| विशेषावश्यकम् | क्षमाश्रमणश्रीजिनभद्रगणिः |
| नन्दीसूत्रम् | क्षमाश्रमणश्रीदेववाचकसूरिः |
| उज्जयन्तस्तवः | |
| गुणस्थानक्रमारोहः | श्रीरत्नशेखरसूरिः |
| योगदृष्टिसमुच्चयः | श्रीहरिभद्रसूरिः |
| महानिशीथम् | गणधरः |
| षट्पुरुषचरित्रम् | श्रीक्षेमङ्करसूरिः |
| प्रभावकचरित्रम् | श्रीचन्द्रप्रभसूरिः |
| उपदेशरत्नाकरः | श्रीमुनिसुन्दरसूरिः |
| શ્રીપાલ રાજાનો રાસ | ઉપાધ્યાય વિનયવિજયજી |




| अजैनसंस्कृतग्रन्थाः | कर्तारः |
| --- | --- |
| वृत्तरत्नाकरः | श्रीभट्टकेदारः |
| श्रुतबोधः | महाकविश्रीकालिदासः |
| मृच्छकटिकम् | श्रीशूद्रककविः |
| वैराग्यशतकम् | महर्षिश्रीभर्तृहरिः |

# समासविग्रहः ।

१—नम्राश्च ते इन्द्राश्च नम्रेन्द्राः 'कर्मधारयः', नम्रेन्द्राणां मौलयः नम्रे० 'तत्पुरुषः', नम्रेन्द्रमौलिभ्यो गलिता नम्रे० 'तत्पुरुषः', पारिजातानां मालाः पारिजातमालाः 'तत्पुरुषः', उत्तमाश्च ताः पारिजातमालाश्च उत्तम० 'कर्मधारयः', नम्रेन्द्रमौलिगलिताश्च ता उत्तमपारिजातमालाश्च नम्रे० 'कर्मधारयः', नम्रेन्द्रमौलिगलितोत्तमपारिजातमालाभिरर्चितौ क्रमौ यस्य स नम्रे० 'बहुव्रीहिः', तत्संबोधनं नम्रे० । अरीणां जातं अरिजातं 'तत्पुरुषः', अपगतं अरिजातं यस्य स अपारि० 'बहुव्रीहिः', तत्सं० अपा० । नाभेरपत्यं पुमान् नाभेयः, तत्सं० नाभेय ! । भुवनानां त्रिकं भुवन० 'तत्पुरुषः', भुवनत्रिकं पातीति भुवन० 'उपपद'समासः, तत्सं० भुवन० । अपवर्गं दत्ते इति अपवर्गदायी 'उपपद'-समासः, तत्सं० अप० । जयतीति जिनः, तत्सं० जिन ! । मदन आदौ यस्य स मदनादिकः 'बहुव्रीहिः', पापानां वर्गः पापवर्गः 'तत्पुरुषः', मदनादिकश्चासौ पापवर्गः मदना० 'कर्मधारयः', अस्तो मदनादिकपापवर्गो येन सः अस्त० 'बहुव्रीहिः', तत्सं० अस्त० ॥

२—अद्रिणा समः अद्रि०, 'तत्पुरुषः', अद्रिसमो विग्रहो यस्य सः अद्रि० 'बहुव्रीहिः', तापनीयस्य राशिः तापनीयराशिः 'तत्पुरुषः', अद्रिसमविग्रहश्चासौ तापनीयराशिः अद्रि० 'कर्मधारयः', प्रदानस्य विधिः प्रदानविधिः 'तत्पुरुषः', अद्रिसमविग्रहतापनीयराशेः प्रदानविधिः अद्रि० 'तत्पुरुषः', तेन अद्रि० । दुःखमेव शत्रुः दुःख० 'कर्मधारयः' । जन्मास्ति येषां ते जन्मवन्तः, तेषां जन्म० । जिनेषु वराः जिनवराः 'तत्पुरुषः' ॥

३—दोषा एव दारूणि[1] दोषदारूणि 'कर्मधारयः', दोषदारूणां दहनानि दोष० 'तत्पुरुषः', तेषु दोष० । मेघाज्जायते इति मेघजा 'उपपद'समासः । जिनस्य इदं जैनं, तत् जैनम् । अघानां जालं अघ० 'तत्पुरुषः', तत् अघ० ॥

४—सुराणां मन्त्रिणः[2] सुरमन्त्रिणः 'तत्पुरुषः', सुरमन्त्रिभिः समाः सुर० 'तत्पुरुषः' । नास्ति धीर्येषां ते अधियः 'बहुव्रीहिः' । नास्ति समानो यस्य सः असमानः 'बहुव्रीहिः', तं असमानम् । वाचो देवता वाग्देवता 'तत्पुरुषः' । कुत्सिता वादिनः कुवादिनः 'कर्मधारयः', कुवादिनां कुलं कुवादि० 'तत्पुरुषः', हतं कुवादिकुलं यया सा हत० 'बहुव्रीहिः' । भव एव ऋणं भवर्णं 'कर्मधारयः', तस्माद् भवर्णात् । विकसन्ति च तानि मुकुलानि[3] च विकसन्मुकुलानि 'कर्मधारयः', कुन्दानां विकसन्मुकुलानि कुन्द० 'तत्पुरुषः', कुन्दविकसन्मुकुलानां आभा यस्य स कुन्द० 'कर्मधारयः', कुन्दविकसन्मुकुलाभो वर्णो यस्याः सा कुन्द० 'बहुव्रीहिः' ॥

---

१ दारुशब्दः पुंल्लिङ्गोऽपि वर्तते । २ मन्त्रिशब्द इकारान्तोऽपि । ३ मुकुलशब्दः पुंल्लिङ्गोऽपि ।

५—कुसुमं बाणो यस्य स कुसुम० 'बहुव्रीहिः', कुसुमबाणस्य चम्वः कुसुम० 'तत्पुरुषः', ताभिः कुसुम० । न पीडितः अपीडितः 'नञ्तत्पुरुषः' । सकलश्चासौ लोकः सकल० 'कर्मधारयः', तं सकल० । वृजिनं एव आजिः वृजिना० 'कर्मधारयः', तस्याः वृजिना० । न जितः अजितः, जिनश्चासौ अजितश्च जिनाजितः 'कर्मधारयः' ॥

६—शरणानामन्वयः शरणा० 'तत्पुरुषः', तं शरणा० । तीर्थं कुर्वन्तीति तीर्थकृतः 'उपपद'समासः, सकलाश्च ते तीर्थकृतश्च सकल० 'कर्मधारयः', तेषां सकल० । सुरैः कृतं सुरकृतं 'तत्पुरुषः', अम्बुजानि एव गर्भं अम्बुज० 'कर्मधारयः', सुरकृतं च तद् अम्बुजगर्भं च सुर० 'कर्मधारयः', सुरकृताम्बुजगर्भमेव निशान्तं येषां ते सुर० 'बहुव्रीहिः', तान् सुर० । रविणा समा रवि० 'तत्पुरुषः', तान् रवि० । अघं एव निशा अघ० 'कर्मधारयः', अघनिशाया अन्तकाः अघ० 'तत्पुरुषः', तान् अघ० ॥

७—समस्तं च तद् जगत् च समस्त० 'कर्मधारयः', शुभा चासौ वस्तुता च शुभ० 'कर्मधारयः', समस्तजगतः शुभवस्तुता समस्त० 'तत्पुरुषः', कृता समस्तजगच्छुभवस्तुता यया सा कृत० 'बहुव्रीहिः' । कुवादिनां गणः कुवादि० 'तत्पुरुषः', जितः कुवादिगणो यया सा जित० 'बहुव्रीहिः' । अस्तो भवो यैस्ते अस्त० 'बहुव्रीहिः', अस्तभवैः स्तुता अस्त० 'तत्पुरुषः' । परिपूर्णं नभो यया सा परिपूर्णनभाः 'बहुव्रीहिः' । नरश्च मरुतश्च नृमरुत् 'समाहारद्वन्द्वः', तस्मै नृमरुते । जिनस्य भारती जिनभारती 'तत्पुरुषः' ॥

८—शुभाश्च ते फणाश्च सुफणाः 'प्रादि'समासः, सुफणेषु रत्नानि येषां ते सुफणरत्नाः 'बहुव्रीहिः', सुफणरत्नाश्च ते सरीसृपाश्च सुफण० 'कर्मधारयः', सुफणरत्नसरीसृपैः राजिता सुफण० 'तत्पुरुषः', तां सुफण० । रिपूणां बलं रिपुबलं 'तत्पुरुषः', रिपुबलस्य प्रहतिः रिपु० 'तत्पुरुषः', तस्यां रिपु० । न पराजिता अपराजिता 'नञ्तत्पुरुषः', तां अपरा०, अथवा अपरैः अजिता अपराजिता 'तत्पुरुषः', तां अपरा० । अग्रिमा चासौ योषिच्च अग्रिम० 'कर्मधारयः', धरणस्य अग्रिमयोषित् धरणा० 'तत्पुरुषः', तां धरणा० । जिनानां गृहाणि जिनगृहाणि 'तत्पुरुषः', तेषु जिन० । नास्ति श्रमो यस्याः सा अश्रमा 'बहुव्रीहिः', तया अश्रमया ॥

९—भुवनानां शेखरः भुवनशेखरः 'तत्पुरुषः', तं भुवन० । बन्देर्भावो बन्दिता, तां वन्दिताम् । इतिश्चासौ स्तुतिश्च इतिस्तुतिः 'कर्मधारयः', इतिस्तुत्यां परा इतिस्तुतिपरा 'तत्पुरुषः' । त्रिदशान् पान्तीति त्रिदश० 'उपपद'समासः, त्रिदशपानां आवली त्रिदश० 'तत्पुरुषः' । यस्यायं यदीयः, यदीयस्य जननी यदीयजननी 'तत्पुरुषः', तां यदीय० । जिनानां ईशः जिनेशः 'तत्पुरुषः', तं जिनेशम् । निहन्तुं मनो येषां ते निह-

न्तुमनसः 'वहुव्रीहिः' । नास्ति उपमा यस्य तद् अनुपमं 'वहुव्रीहिः', अनुपमं वैभवं यस्य सः अनुपम० 'वहुव्रीहिः', तं अनुपम० । शं भवति अनेनेति शम्भवः, तं शम्भवम् ॥

१०—शुभश्चासौ मेरुश्च सुमेरुः 'प्रादि'समासः, सुमेरुश्चासौ गिरिश्च सुमेरु० 'कर्मधारयः', सुमेरुगिरेर्मूर्धा सुमेरु० 'तत्पुरुषः', तस्मिन् सुमेरु० । दिव्याश्च ते आनकाश्च दिव्या० 'कर्मधारयः', अनेके च ते दिव्यानकाश्च अनेक० 'कर्मधारयः', ध्वनन्तः अनेकदिव्यानका यस्मिन् स ध्वनद० 'वहुव्रीहिः', तस्मिन् ध्वनद० । अतिशयिता भव्या अतिभव्याः 'प्रादि'समासः । जगतां त्रितयं जग० 'तत्पुरुषः', जगत्त्रितयस्य पावनो जग० 'तत्पुरुषः' । जिनेषु वरा जिनवराः 'तत्पुरुषः', जिनवराणां अभिषेको जिन० । न कोमलं अकोमलं 'नञ्तत्पुरुषः', घनं च तद् अकोमलं च घनाकोमलं 'कर्मधारयः', तद् घना० ॥

११—अपेतं निधनं यस्य सः अपेत० 'वहुव्रीहिः', तं अपेत० । वुधश्चासौ जनश्च वुध० 'कर्मधारयः', तस्य वुध० । शान्ता आपदो येन स शान्ता० 'वहुव्रीहिः', तं शान्ता० । प्रमाणानि च नयाश्च प्रमाणनयाः 'इतरेतरद्वन्द्वः', प्रमाणनयैः सङ्कुलः प्रमाण० 'तत्पुरुषः', तं प्रमाण० । न सत् असत् 'नञ्तत्पुरुषः', असद् दृश् येषां ते असद्दृशः 'वहुव्रीहिः', तेषां अस० । तापं ददातीति तापदः 'उपपद'समासः, तं तापदम् । जिनेषु वरा जिनवराः 'तत्पुरुषः', जिनवराणां आगमः जिनवरागमः 'तत्पुरुषः', तं जिन० । महती सम्पद् यस्मिन् स महासम्पत् 'वहुव्रीहिः', तं महा० । सुखं आत्मा यस्य तत् सुखात्मकं 'वहुव्रीहिः', तत् सुखा० । कामश्च हासश्च कामहासौ 'इतरेतरद्वन्द्वः', विगतौ कामहासौ यस्मिन् तद् विगत० 'वहुव्रीहिः', तद् विगत० ॥

१२—शरश्च अक्षश्च धनुश्च शङ्खश्च शरा० 'इतरेतरद्वन्द्वः', शराक्षधनुशङ्खान् बिभर्तीति शरा० 'उपपद'समासः । निजं च तद् यशश्च निजयशः 'कर्मधारयः', निजयश इव वलक्षा निज० 'मध्यमपदलोपि'समासः । अखिलं च तद् जगत् च अखिल० 'कर्मधारयः', अखिलजगतो जना अखिल० 'तत्पुरुषः', न हिताः अहिताः 'नञ्तत्पुरुषः', अखिलजगज्जनानां अहिता अखिल० 'तत्पुरुषः', महान्ति च तानि वलानि च महावलानि 'कर्मधारयः', अखिलजगज्जनाहितानां महावलानि अखिल० 'तत्पुरुषः', अखिलजगज्जनाहितमहावलानां क्षामता अखिल० 'तत्पुरुषः', कृता अखिलजगज्जनाहितमहावलक्षामता यया सा कृताखिल० 'वहुव्रीहिः' । विनीता चासौ जनता च विनीत० 'कर्मधारयः', विपद एव द्विपाः विपद्द्विपाः 'कर्मधारयः' विनीतजनताया विपद्द्विपाः विनीत० 'तत्पुरुषः', विनीतजनताविपद्द्विपानां समृद्धिः विनीत० 'तत्पुरुषः', विनीतजनताविपद्द्विपसमृद्धेः अभिद्रोहिणी विनीत० 'तत्पुरुषः' । सुरभौ स्थिता सुरभि० 'तत्पुरुषः' । महीं धारयन्तीति

---

१ टीकायां तु विगतः कामहासो यस्मिन् इत्युल्लेखः ।

महीध्राः 'उपपद'समासः, रिपव एव महीध्राः रिपु० 'कर्मधारयः', रिपुमहीध्रान् भिनत्तीति रिपु० 'उपपद'समासः ॥

१३—भीतिमांश्चासौ जनश्च भीति० 'कर्मधारयः', अभयीकृतो भीतिमज्जनो येन सः अभयी० 'बहुव्रीहिः'। सुरान् पान्तीति सुरपाः 'उपपद'समासः, सुरपैः कृतं सुर० 'तत्पुरुषः', न तुला अतुला 'नञ्तत्पुरुषः', अतुला चासौ भूतिश्च अतुल० 'कर्मधारयः', अतुलभूत्या मज्जनं अतुल० 'तत्पुरुषः', सुरपकृतं अतुलभूतिमज्जनं यस्य स सुरप० 'बहुव्रीहिः'। भव्यानां मनांसि भव्य० 'तत्पुरुषः', भव्यमनसां अभिनन्दनः भव्य० 'तत्पुरुषः'। शिवं ददातीति शिवदः 'उपपद'समासः ॥

१४—न चरतीति अचरः 'नञ्तत्पुरुषः', तं अचरम्। कृताः चरणा यैः ते कृत० 'बहुव्रीहिः'। शतपत्राणां सञ्चयः शत० 'तत्पुरुषः', तस्मिन् शत०। अपवर्गस्य उपायः अप० 'तत्पुरुषः', अपवर्गोपायस्य शोधनाः अप० 'तत्पुरुषः'। यश एव धनं येषां ते यशोधनाः 'बहुव्रीहिः' ॥

१५—विष्टपानां त्रयं विष्टप० 'तत्पुरुषः', अखिलं च तद् विष्टपत्रयं च अखिल० 'कर्मधारयः', व्याप्तं अखिलविष्टपत्रयं यया सा व्याप्ता० 'बहुव्रीहिः'। पदानां चमूः पद० 'तत्पुरुषः', तया पद०। पुष्टानि च तानि पत्राणि च पुष्ट० 'कर्मधारयः', नया एव पुष्टपत्राणि यस्याः सा नय० 'बहुव्रीहिः', तया नय०। जिनैः उदिता जिनोदिता 'तत्पुरुषः' ॥

१६—महच्च तद् दलं च महादलं 'कर्मधारयः', अब्जस्य महादलं अब्ज० 'तत्पुरुषः', अब्जमहादलवद् आभा यस्याः सा अब्ज० 'बहुव्रीहिः', तया अब्ज०। न तुलः अतुलः 'नञ्तत्पुरुषः', मोदस्य लाभो मोद० 'तत्पुरुषः', अतुलो मोदलाभो यया सा अतुल० 'बहुव्रीहिः', तया अतुल०। महान् शिखण्डी यस्याः सा महा० 'बहुव्रीहिः'। रिपूणां राशिः रिपु० 'तत्पुरुषः', रिपुराशेः खण्डिका रिपु० 'तत्पुरुषः' ॥

१७—उरुः प्रभा यस्य स उरु० 'बहुव्रीहिः', तं उरु०। अनङ्ग एव तरुः अनङ्ग० 'कर्मधारयः', अनङ्गतरोः प्रभञ्जनः अनङ्ग० 'तत्पुरुषः', तं अनङ्ग०। महश्च दया च महोदये 'इतरेतरद्वन्द्वः', सत्यौ महोदये यस्य स सन्म० 'बहुव्रीहिः', तं सन्म०। शोभना मतिर्यस्य स सुमतिः, सुमतिश्चासौ जिनश्च सुमति० 'कर्मधारयः', तं सुमति०। महांश्चासौ उदयश्च महोदयः 'कर्मधारयः', विकसन् महोदयो यस्य स विकस० 'बहुव्रीहिः', तं विकस०॥

१८—भव एव उदधिः भवोदधिः 'कर्मधारयः', तस्मिन् भवो०। गुरु वैभवं यस्य स गुरु० 'बहुव्रीहिः'। तमसोऽयं तामसः, न तामसः अतामसः 'नञ्तत्पुरुषः', तं अतामसम्। तीर्थं कुर्वन्तीति तीर्थं० 'उपपद'समासः, तेषां तीर्थं०। न संवरो यस्य सः असं० 'बहुव्रीहिः', तं असं० ॥

१९—भवे वासो भव० 'तत्पुरुषः', भववास एव दाम भव० 'कर्मधारयः', तद् भव०। जिनानां वाग् जिन० 'तत्पुरुषः'। अतिशायिनी शिवा अतिशिवा 'प्रादि'स-

ग्रासः। न सङ्गता अस० 'नञ्तत्पुरुषः', तां अस०। कामस्य सङ्गता काम० 'तत्पुरुषः', च्युता कामसङ्गता यस्याः सा च्युत० 'वहुव्रीहिः', तां च्युत० ॥

२०—कुशे शेते इति कुशेशयं 'उपपद'समासः, तस्मिन् कुशे०। कनकवत् छविर्यस्याः सा कनक० 'वहुव्रीहिः', तां कनक०। दुरितानां (अङ्कुश इव) अङ्कुशः दुरि० 'तत्पुरुषः', तस्मिन् दुरि०। अहिता एव अद्रयः अहिता० 'कर्मधारयः', अहिताद्रीन् हन्तीति अहि० 'उपपद'समासः, वज्रस्य शृङ्खला वज्र० 'तत्पुरुषः', अहिताद्रिघ्नी चासौ वज्रश्रृङ्खला च अहिता० 'कर्मधारयः', तां अहिता०। वज्रमयी शृङ्खला यस्याः सा वज्र०॥

२१—रुचीनां सम्पद् रुचि० 'तत्पुरुषः', तुल्या रुचिसम्पद् यस्य स तुल्य० 'वहुव्रीहिः', तस्मिन् तुल्य०। पुष्पाणां उत्कराः पुष्पो० 'तत्पुरुषः', तैः पुष्पो०। सुराणां गणः सुर० 'तत्पुरुषः', तेन सुर०। प्रमदो गर्भं यथा स्यात् तथा प्रमद० 'अव्ययीभावः'। न जायते इति अजः 'नञ्तत्पुरुषः', तस्मिन् अजे। यशसि हितो यशस्यः, तस्मिन् यशस्ये। पद्मस्येव प्रभा यस्य स पद्म० 'वहुव्रीहिः', तस्मिन् पद्म०। न जेयः अजेयः 'नञ्तत्पुरुषः', अजेयश्चासौ शस्यश्च अजेयशस्यः 'कर्मधारयः', तस्मिन् अजेय० ॥

२२—मज्जनस्य उदकं मज्ज० 'तत्पुरुषः', मज्जनोदकेन पवित्रितः मज्ज० 'तत्पुरुषः', मन्दरश्चासौ अगश्च मन्द० 'कर्मधारयः', मज्जनोदकपवित्रितः मन्दरागो यैस्ते मज्ज० 'वहुव्रीहिः'। मन्दो रागो येषां ते मन्द० 'वहुव्रीहिः'। घर्मस्य उदयः घर्मो० 'तत्पुरुषः', अब्धौ पतनं अब्धि० 'तत्पुरुषः', घर्मोदयश्च अब्धिपतनं च घर्मो० 'समाहारद्वन्द्वः', तस्मिन् घर्मो०। वनस्य राजिः वन० 'तत्पुरुषः', वनराजिश्च नावश्च वनराजिनावः 'इतरेतरद्वन्द्वः'। देवैः सहिताः सदेवाः 'वहुव्रीहिः', सदेवाश्च नराश्च सदेव० 'इतरेतरद्वन्द्वः' नन्दिताः सदेवनरा यैस्ते नन्दित० 'वहुव्रीहिः' ॥

२३—शची आदौ यासां ताः शच्यादयः 'वहुव्रीहिः', दिव्याश्च ता वनिताश्च दिव्य० 'कर्मधारयः', शच्यादयश्च ता दिव्यवनिताश्च शच्या० 'कर्मधारयः', शच्यादिदिव्यवनितानां ओघः शच्या० 'तत्पुरुषः', शच्यादिदिव्यवनितौघस्य धवाः शच्यादि० 'तत्पुरुषः', शच्यादिदिव्यवनितौघधवैः स्तुतः शच्यादि० 'तत्पुरुषः', तत्सं० शच्यादि०। न व्याहतं अव्या० 'नञ्तत्पुरुषः', अव्याहतं च तद् उदितं च अव्या० 'कर्मधारयः', विधां अनतिक्रम्य यथा० 'अव्ययीभावः', वस्तूनां तत्त्वं वस्तुतत्त्वं 'तत्पुरुषः', यथाविधं च तद् वस्तुतत्त्वं यथाविध० 'कर्मधारयः', अव्याहतोदितं यथाविधवस्तुतत्त्वं येन तद् अव्या० 'वहुव्रीहिः', तत्सं० अव्या०। जिनेषु जिनानां वा इन्द्राः जिनेन्द्राः 'तत्पुरुषः', जिनेन्द्राणां मतं जिने० 'तत्पुरुषः', तत्सं० जिने०। न कम्प्राः अकम्प्राः 'नञ्तत्पुरुषः', नित्यं अकम्प्रा देहिनो यस्मिन् तत् नित्य० 'वहुव्रीहिः', तत् नित्य०। जन्म आदौ यासां ता जन्मा० 'वहुव्रीहिः', अनन्ताश्च ता विपदश्च अनन्त० 'कर्मधारयः', जन्मादयश्च ता अनन्तविपदश्च जन्मा० 'कर्मधारयः', तासां जन्मा० ॥

१ टीकायां त्वन्यथा सूचितमस्ति।

२४—कनकवद् रुग् यस्याः सा कनकरुक् 'वहुव्रीहिः'। वारणानां ईशः वारणेशः 'तत्पुरुषः', सितश्चासौ वारणेशश्च सित० 'कर्मधारयः', तं सित०। वज्रमयं अङ्कुशं यस्याः सा वज्राङ्कुशी। न हिताः अहिताः 'नञ्तत्पुरुषः', अहितानां वारणं अहित० 'तत्पुरुषः', तस्मिन् अहित०। वज्रं च अङ्कुशश्च वज्राङ्कुशं 'समाहारद्वन्द्वः', तद् वज्रा० ॥

२५—ख्यातेः भाजनं यः स ख्याति० 'वहुव्रीहिः'। शोभनौ पार्श्वौ यस्य स सुपार्श्वः, श्रिया युक्तः सुपार्श्वः श्रीसुपार्श्वः 'मध्यमपदलोपी'समासः, तत्सं० श्रीं०। नित्यं सौख्यं यस्य स नित्य० 'वहुव्रीहिः', तत्सं० नित्य०। अतिशायिनी भा यस्य सः अतिभाः 'वहुव्रीहिः' ॥

२६—जिनानां अंह्री जिनांह्री 'तत्पुरुषः', तौ जिनांह्री। अमराणां संसद् अमर० 'तत्पुरुषः', आनता चासौ अमरसंसच्च आनता० 'कर्मधारयः', तया आनता०। दिव्यं च तत् सौवर्णं च दिव्य० 'कर्मधारयः', अवानं च तत् तामरसं च अवान० 'कर्मधारयः', दिव्यसौवर्णं च तद् अवानतामरसं च दिव्य० 'कर्मधारयः', तद् दिव्य० ॥

२७—अरीणां शमनं अरि० 'तत्पुरुषः', जातं अरिशमनं यस्याः सा जाता० 'वहुव्रीहिः'। न आविलाः अनाविलाः 'नञ्तत्पुरुषः', सन्तश्च ते नयाश्च सन्नयाः 'कर्मधारयः', अनाविलाः सन्नया यस्यां सा अना० 'वहुव्रीहिः' ॥

२८—हेम्न[1] इव आभा यस्याः सा हेमाभा 'वहुव्रीहिः'। न समा असमा 'नञ्तत्पुरुषः'। नाशिता अरयो यैस्तानि नाशिता० 'वहुव्रीहिः', तैः नाशिता०। शितानि च तानि अरीणि च शिता० 'कर्मधारयः', तैः शिता० ॥

२९—भवाद् उद्भवा भवोद्भवा 'तत्पुरुषः', भवोद्भवा तृड् येषां ते भवो० 'वहुव्रीहिः', तेषां भवो०। शिवमेव प्रपा शिव० 'कर्मधारयः', कृता शिवप्रपा येन स कृत० 'वहुव्रीहिः', तं कृत०। हर्षेण सहितं यथा स्यात् तथा सहर्षं 'अव्ययीभावः'। वपुषः प्रपञ्चः वपुःप्रपञ्चः 'तत्पुरुषः', वरो वपुःप्रपञ्चो येषां ते वर० 'वहुव्रीहिः', वरवपुःप्रपञ्चाश्च ते अमराश्च वर० 'कर्मधारयः', तैः वर०। प्रभाया वलयं प्रभा० 'तत्पुरुषः', प्रभावलयस्य कान्तता प्रभा० 'तत्पुरुषः', प्रभावलयकान्ततया अपहसिता प्रभा० 'तत्पुरुषः', चन्द्रस्य प्रभा चन्द्र० 'तत्पुरुषः', उर्वी चासौ चन्द्रप्रभा च उरु० 'कर्मधारयः', प्रभावलयकान्ततापहसिता उरुचन्द्रप्रभा येन स प्रभा० 'वहुव्रीहिः', तं प्रभा०। परमश्चासौ ईश्वरश्च परमे० 'कर्मधारयः', तं परमे०। विनयेन चारु यथा स्यात् तथा विनय० 'अव्ययीभावः'। चन्द्रस्येव प्रभा यस्य स चन्द्रप्रभः, तं चन्द्र० ॥

३०—कलुषस्य वासो यस्मिन् स कलुषवासकः 'वहुव्रीहिः', तस्मात् कलुष०। सुखानां अतिशयः सुखा० 'तत्पुरुषः', सुखातिशय एव सम्पदः सुखा० 'कर्मधारयः', तासां सुखा०।

---

१ अकारान्तोऽपि हेमशब्दः।

भुवनानां भासकाः भुवन० 'तत्पुरुषः', न विद्यते दर्पको येषां ते अदर्पकाः 'बहुव्रीहिः', भुवनभासकाश्च ते अदर्पकाश्च भुवन० 'कर्मधारयः'। विलीनो मलो यस्मात् तद् विलीन० 'बहुव्रीहिः', विलीनमलं च तत् केवलं च विलीन० 'कर्मधारयः', न तुलः अतुलः 'नञ्-तत्पुरुषः', अतुलश्चासौ विकासश्च अतुल० 'कर्मधारयः', विलीनमलकेवलस्य अतुलविकासः विलीन० 'तत्पुरुषः', विलीनमलकेवलातुलविकासं बिभ्रति ते विलीन० 'उपपद'-समासः । शोभनं च तद् वचश्च सुवचः 'कर्मधारयः', तेन सुवचसा । सभां राजितुं शीलं यस्य तत् सभा० 'बहुव्रीहिः', तेन सभा० ॥

३१—भुवनानां त्रयं भुवन० 'तत्पुरुषः', समस्तं च तद् भुवनत्रयं च समस्त० 'कर्मधारयः', समस्तभुवनत्रयस्य प्रथनं समस्त० 'तत्पुरुषः', समस्तभुवनत्रयप्रथने सज्जानि समस्त० 'तत्पुरुषः', नाना च तानि पदानि च नानापदानि 'कर्मधारयः', समस्तभुवनत्रयप्रथनसज्जानि नानापदानि यस्मिन् स समस्त० 'बहुव्रीहिः' । सन्तश्च ते जनाश्च सज्जनाः 'कर्मधारयः', तान् सज्जनान् । समुल्लसिता भङ्गा यस्मिन् स समु० 'बहुव्रीहिः', तं समु० । न विद्यते मलो यस्मिन् सः अमलः 'बहुव्रीहिः', तं अमलम् । न गम्यते इति अगमः, तं अगमम् । स्फुरन्तश्च ते नयाश्च स्फुर० 'कर्मधारयः', स्फुरन्नयैः निवारिताः स्फुर० 'तत्पुरुषः', न सन्तः असन्तः 'नञ्तत्पुरुषः', असन्तश्च ते उपलम्भाश्च असदु० 'कर्मधारयः', स्फुरन्नयनिवारिता असदुपालम्भा यस्य स स्फुर० 'बहुव्रीहिः', जैनश्चासौ आगमश्च जैना० 'कर्मधारयः', स्फुरन्नयनिवारितासदुपालम्भश्चासौ जैनागमश्च स्फुर० 'कर्मधारयः', तं स्फुर० ॥

३२—गदा च अक्षमाला च गदा० 'इतरेतरद्वन्द्वः', धृते गदाक्षमाले यया सा धृत० 'बहुव्रीहिः' । भयानां शमः भय० 'तत्पुरुषः', भयशमे क्षमा भय० 'तत्पुरुषः' । न विद्यते लाघवं यस्याः सा अलाघवा 'बहुव्रीहिः' । घनं च तद् अञ्जनं च घना० 'कर्मधारयः'[1], घनाञ्जनेन समा घना० 'तत्पुरुषः', घनाञ्जनसमा प्रभा यस्याः सा घना० । घातकानां आली[2] घात० 'तत्पुरुषः', घातकाल्याः ईहितं घात० 'तत्पुरुषः', विहतं घातकालीहितं यस्मिन् तद् विहत० 'बहुव्रीहिः', तद् विहत० । न विद्यते तुला यस्य तद् अतुलं 'बहुव्रीहिः', तद् अतुलम् ॥

३३—विमलं च तत् कोमलं च विमल० 'कर्मधारयः', विमलकोमलं च तत् कोकनदं च विमल० 'कर्मधारयः', विमलकोमलकोकनदस्य च्छदः विमल० 'तत्पुरुषः', विमलकोमलकोकनदच्छदस्य च्छविः विमल० 'तत्पुरुषः', विमलकोमलकोकनदच्छदच्छविं हरतीति विमल० 'उपपद' समासः, तौ विमल० । अमराणां इमे आमराः, तैः आमरैः । सततं नूता सततनूता 'प्रादि'समासः, सततनूता तनुर्ययोः तौ सतत० 'बहुव्रीहिः', तौ सतत० । अमतस्य हेठनं अमत० 'तत्पुरुषः', अमतहेठने लालसाः अमत० 'तत्पुरुषः', तत्सं० अमत० ॥

---

१ घनश्च अञ्जनं च घनाञ्जने 'इतरेतरद्वन्द्वः' इत्यपि संभवति । २ आलिर्वा ।

३४—शकुन्तेषु वरः शकु० 'तत्पुरुषः', कलशश्च कुन्तश्च शकुन्तवरश्च कलश० 'इतरेतरद्वन्द्वः', कलशकुन्तशकुन्तवरैः अङ्कितानि कलश० 'तत्पुरुषः', क्रमाणां तलानि क्रम० 'तत्पुरुषः', कलशकुन्तशकुन्तवराङ्कितानि क्रमतलानि येषां ते कलश० 'बहुव्रीहिः'। मतस्य लाभः मत० 'तत्पुरुषः', मतलाभं कुर्वन्तीति मत० 'उपपद'समासः। विशेषेण गतः विगतः 'प्रादि'समासः, विगतो रागो येषां ते विगत० 'बहुव्रीहिः', अतिशयेन विगतरागाः विगत०। न विद्यते अन्तो यस्य तद् अनन्तं 'बहुव्रीहिः', तद् अनन्तम्। न विद्यते अङ्गं यस्य सः अनङ्गः 'बहुव्रीहिः', अनङ्गं जयन्तीति अनङ्ग० 'उपपद'समासः॥

३५—अवमानि एव सन्तमसं अव० 'कर्मधारयः', तद् अव०। आगमानां रोचिषः आगम० 'तत्पुरुषः', तेषां आगम०। पावनं च पालनं च पावन० 'समाहारद्वन्द्वः', भुवनस्य पावनपालनं भुवन० 'तत्पुरुषः', तद् भुवन०। जिनानां मतं जिन० 'तत्पुरुषः', तत् जिन०॥

३६—आयत्या सहितं सायति 'बहुव्रीहिः', सायति च तत् साम च सायति० 'कर्मधारयः', सायतिसाम करोतीति सायति० 'उपपद'समासः। शोभनश्चासौ तरुश्च सुतरुः 'कर्मधारयः', तेन सुतरुणा। तरुणं च तद् अब्जं च तरुणा० 'कर्मधारयः', तरुणाब्जेन समा तरुणा० 'तत्पुरुषः', तरुणाब्जसमा द्युतिर्यस्याः सा तरुणा० 'बहुव्रीहिः'। कजे गता कज० 'तत्पुरुषः'। मुदा सहितं समुद् 'बहुव्रीहिः' तेन समुदा। अतिशयेन मता अति० 'प्रादि'समासः॥

३७—देवानां लोकः देव० 'तत्पुरुषः', देवलोकस्य उपमानं यस्य स देव० 'बहुव्रीहिः'। नराणां लोकः नर० 'तत्पुरुषः'। कोपश्च मानश्च कोपमानौ 'इतरेतरद्वन्द्वः', न विद्येते कोपमानौ यस्य सः अकोप० 'बहुव्रीहिः'। सलिलानां धारा सलिल० 'तत्पुरुषः', ऋजिमैव सलिलधारा ऋजिम० 'कर्मधारयः', ऋजिमसलिलधारया धौतः ऋजिम० 'तत्पुरुषः', मायैव परागः माया० 'कर्मधारयः', ऋजिमसलिलधौतः मायापरागो यस्य स ऋजिम० 'बहुव्रीहिः'। भवस्य भीतिः भव० 'तत्पुरुषः', तस्याः भव०। अपगतो रागो यस्य सः अप० 'बहुव्रीहिः'॥

३८—दिव्यानि च तानि राजीवानि च दिव्य० 'कर्मधारयः', दिव्यराजीवानां वारः दिव्य० 'तत्पुरुषः', चरणमेव सरोजं चरण० 'कर्मधारयः', दिव्यराजीववारे स्थितं दिव्य० 'तत्पुरुषः', दिव्यराजीववारस्थितं चरणसरोजं यस्य स दिव्य० 'बहुव्रीहिः', तं दिव्य०। भव्यानां राजी भव्य० 'तत्पुरुषः'। जिनेषु वरा जिन० 'तत्पुरुषः', जिनवराणां विसरः जिन० 'तत्पुरुषः', तं जिन०। पापानां विध्वंसः पाप० 'तत्पुरुषः', पापविध्वंसे दक्षः पाप० 'तत्पुरुषः', तं पाप०। सन्ति अक्षाणि यस्य स सदक्षः 'बहुव्रीहिः', तं सदक्षम्॥

३९—अरय एव तिमिराणि अरि० 'कर्मधारयः', अरितिमिराणां ओघः अरि० 'तत्पुरुषः', अरितिमिरौघस्य व्याहतिः अरि० 'तत्पुरुषः', तस्यां अरि०। बहवो विधा येषां

तानि बहुविधानि 'बहुव्रीहिः', बहुविधानि च तानि जन्मानि च बहु० 'कर्मधारयः', बहुविधजन्मनां व्रातः बहु० 'तत्पुरुषः', बहुविधजन्मव्राताज्जायते इति बहु० 'उपपद'समासः, बहुविधजन्मव्रातजं च तद् एनश्च बहु० 'कर्मधारयः', बहुविधजन्मव्रातजैनसः कृतोऽन्तो येन स बहु० 'बहुव्रीहिः'। कुत्सितं च तद् मतं च कुमतं 'कर्मधारयः', कुमतस्य विघातः कुमत० 'तत्पुरुषः', कृतः कुमतविघातो येन स कृत० 'बहुव्रीहिः'॥

४०—महांश्चासौ सिन्धुश्च महा० 'कर्मधारयः', महासिन्धुं मर्यादीकृत्य आमहा० 'अव्ययीभावः'। नाना च ते कृताश्च नाना० 'कर्मधारयः', जिनानां गृहाणि जिन० 'तत्पुरुषः', जिनगृहाणां मालाः जिन० 'तत्पुरुषः', सन्तश्च महाश्च सन्महाः 'कर्मधारयः', जिनगृहमालासु सन्महाः जिन० 'तत्पुरुषः', नानाकृता जिनगृहमालासन्महा यया सा नाना० 'बहुव्रीहिः' कनकस्येव निभा यस्याः सा कनक० 'बहुव्रीहिः', वपुषः श्रीः वपुःश्रीः 'तत्पुरुषः', कनकनिभा वपुःश्रीर्यस्याः सा कनक०। साधिता आया यया सा साधि० 'बहुव्रीहिः'। पुरुषेषु दत्तं यस्याः सा पुरुषदत्ता। आधेर्भावः आधिता, आधितया सहिता साधिता 'बहुव्रीहिः', तस्याः साधि०॥

४१—मलेन सहिताः समलाः 'बहुव्रीहिः', बहुतमाश्च समलाश्च बहु० 'कर्मधारयः', विमलिता बहुतमससमला येन स विमलित० 'बहुव्रीहिः', तं विमलित०। प्रभाणां मण्डलं प्रभा० 'तत्पुरुषः', स्फुरत् च तत् प्रभामण्डलं च स्फुर० 'कर्मधारयः', स्फुरत्प्रभामण्डलेन अस्तं स्फुर० 'तत्पुरुषः', स्फुरत्प्रभामण्डलास्तं सन्तमसं येन स स्फुर० 'बहुव्रीहिः', तं स्फुर०। सकला चासौ श्रीश्च सकल० 'कर्मधारयः', सकलश्रिया श्रेयौ सकल० 'तत्पुरुषः', सकलश्रीश्रेयौ अंसौ यस्य स सकल० 'बहुव्रीहिः', तं सकल०। जिनानां ईश्वरः जिने० 'तत्पुरुषः', तं जिने०॥

४२—भव्यांश्च ते जनाः भव्य० 'कर्मधारयः', आनन्दिता भव्यजना येन तद् आन० 'बहुव्रीहिः', तद् आन०। घनं च तद् अघं च घना० 'कर्मधारयः', घनाघमेव घर्मः घना० 'कर्मधारयः', घनाघघर्मेण आर्ताः घना० 'तत्पुरुषः', शिशिरं च तत् शुभं च शिशिर० 'कर्मधारयः', शिशिरशुभं च तद् व्यजनं च शिशिर० 'कर्मधारयः', घनाघघर्मार्तानां शिशिरशुभव्यजनं घना० 'तत्पुरुषः', तद् घना०। जिनाश्च ते देवाश्च जिन० 'कर्मधारयः', क्रमयोः युगलं क्रम० 'तत्पुरुषः', जिनदेवानां क्रमयुगलं जिन० 'तत्पुरुषः', तत् जिन०। सन्तश्च ते गुणाश्च सद्० 'कर्मधारयः', तैः सद्गुणैः। न जिनत् अजिनत् 'नञ्तत्पुरुषः', तद् अजि०॥

४३—जिनस्य इदं जैनं, तत् जैनम्। उपमानेन रहितं उपमान० 'तत्पुरुषः', तद् उपमान०। जगतः त्राणं जग० 'तत्पुरुषः', जगत्त्राणस्य कारि जग० 'तत्पुरुषः', तत् जग०। न हितं अहितं 'नञ्तत्पुरुषः', तद् अहितम्। सन् चासौ महिमा च सन्म० 'कर्मधारयः' सन्महिमानं करोतीति सन्म० 'उपपद'समासः तत् सन्म०। महान्ति च तानि कुमुदानि

च महा० 'कर्मधारयः', भव्या एव महाकुमुदानि भव्य० 'कर्मधारयः', भव्यमहाकुमुदानां बोधः भव्य० 'तत्पुरुषः', भव्यमहाकुमुदबोधस्य जन्म भव्य० 'तत्पुरुषः', हिमाः करा यस्य स हिम० 'बहुव्रीहिः', भव्यमहाकुमुदबोधजन्मनि हिमकरः भव्य० 'तत्पुरुषः', तं भव्य० ॥

४४—द्युत्या विजितः द्युति० 'तत्पुरुषः', द्युतिविजितः तमालो यया सा द्युति० । पविश्च फलं च घण्टा च अक्षश्च पवि० 'इतरेतरद्वन्द्वः', पविफलघण्टाक्षान् बिभर्तीति पवि० 'उपपद'समासः । लसन्ती चासौ तता च लस० 'कर्मधारयः', लसत्तता माला यस्याः सा लस० 'बहुव्रीहिः' । नरि तिष्ठतीति नृस्था 'उपपद'समासः । न मर्त्या अमर्त्याः 'नञ्तत्पुरुषः', अमर्त्यानां सामन्ता अमर्त्य० 'तत्पुरुषः', अमर्त्यसामन्तैः नुता अमर्त्य० 'तत्पुरुषः' ॥

४५—देवानां पूज्यः देव० तत्पुरुषः ॥

४६—सुष्ठु रुचितानि सुरुचितानि 'प्रादि'समासः, तैः सुरु० । दानवानां अरयः दान० 'तत्पुरुषः', तैः दान० ॥

४७—आदिश्च[1] निधनं[2] च आदि० 'इतरेतरद्वन्द्वः', न विद्येते आदिनिधने यस्याः सा अनादि० 'बहुव्रीहिः' । न दीना अदीना 'नञ्तत्पुरुषः' । अतिशयेन प्रददातीति अति० 'उपपद'समासः । मतेः प्रदानं मति० 'तत्पुरुषः', तत् मति० । न नमतीति अनमा 'नञ्तत्पुरुषः' । जिनानां इन्द्राः जिनेन्द्राः 'तत्पुरुषः', जिनेन्द्राणां वाक् जिने० ॥

४८—सुवर्णस्य अयं सौवर्णः, सौवर्णः पट्टो यस्याः सा सौवर्ण० 'बहुव्रीहिः' । श्रीवद् गौरी श्रीगौरी 'कर्मधारयः' । श्रिया सहिता गौरी श्रीगौरी 'मध्यमपदलोपी'समासः । पद्मं हस्ते यस्याः सा पद्महस्तिका, अथवा पद्मवद् हस्तौ यस्याः सा पद्म० 'बहुव्रीहिः' । हस्तिनः इव कायो यस्याः सा हस्ति० 'बहुव्रीहिः' । महती गोधा ( वाहनं ) यस्याः सा महागोधा 'बहुव्रीहिः' । आगसः धाम आगो० 'तत्पुरुषः', आगोधाम्नः ध्वस्तिः आगो० 'तत्पुरुषः', तस्यै आगो० ॥

४९—निजश्चासौ महिमा च निज० 'कर्मधारयः', निजमहिम्ना विजितं कमलं येन तत् निज० 'बहुव्रीहिः', तत् निज० । प्रमदस्य भरः प्रमद० 'तत्पुरुषः', प्रमदभरेण आनम्राः प्रमद० 'तत्पुरुषः', प्रमदभरानम्राश्च ते देवाश्च प्रमद० 'कर्मधारयः', प्रमदभरानम्रदेवैः पूजितकं प्रमद० 'तत्पुरुषः', तत् प्रमद० । धाम युनक्तीति धाम० 'उपपद'-समासः, तत् धाम० । न लङ्घनीया अलङ्घ० 'नञ्तत्पुरुषः', गुणानां सम्पद् गुण० 'तत्पुरुषः', अलङ्घनीया गुणसम्पद् यस्य तत् अलङ्घ० 'बहुव्रीहिः', तत् अलङ्घ० । क्रमयोर्युगलं क्रम० 'तत्पुरुषः', तत् क्रम० ॥

५०— अखिलाश्च ता रुजश्च अखिल० 'कर्मधारयः', शमिता अखिलरुजो येन

[1] अत्र नपुंसकलिंगोऽपि आदिशब्दः । [2] निधनशब्दः पुंल्लिङ्गोऽपि वर्तते ।

तत् शमिता० 'बहुव्रीहिः', तस्मिन् शमिता० । नाना च तानि अम्भोजानि च नाना० 'कर्मधारयः', नानाम्भोजानां उदरं नाना० 'तत्पुरुषः', नानाम्भोजोदरे लालितं नाना० 'तत्पुरुषः', तस्मिन् नाना० । अतिशयेन चारु यथा स्यात् तथा अति० 'अव्ययीभावः' । चरणयोर्युगं चरण० 'तत्पुरुषः', तस्मिन् चरण० । दिवि जायन्ते इति दिवि० 'उपपद'-समासः, दिविजैः नतं दिवि० 'तत्पुरुषः', तस्मिन् दिवि० । दुःखेन लभ्यते इति दुर्लभं, तस्मिन् दुर्लभे ॥

५१—शोभनो रवो यस्य स सुरवः 'बहुव्रीहिः', तं सु० । अम्बु ददातीति अम्बुदः 'उपपद'समासः तं अम्बु० । सुरैः वन्द्या सुर० 'तत्पुरुषः' ॥

५२—पविश्च मुशलं च पवि० 'इतरेतरद्वन्द्वः', पविमुशले करयोर्यस्याः सा पवि० 'बहुव्रीहिः,। अतिशयेन कराला अति० 'प्रादि'समासः, अतिकराला आभा यस्य तत् अति० 'बहुव्रीहिः', तत् अति० । रागेण अन्धाः रागा० 'तत्पुरुषः', रागान्धाश्च ते अरयश्च रागा० 'कर्मधारयः', रागान्धारीणां ईरणं रागा० 'तत्पुरुषः', रागान्धारीरणं करोतीति रागा० 'उपपद'समासः । नीला चासौ प्रभा च नील० 'कर्मधारयः', नीलप्रभाणां उत्करो नील० 'तत्पुरुषः,' नीलप्रभोत्करो यस्यां सा नील० 'बहुव्रीहिः' ॥

५३—गदा एव वल्लर्यः गदा० 'कर्मधारयः', गदावल्लरीभिः गुपिलं गदा० 'तत्पुरुषः', गदावल्लरीगुपिलं च तत् जन्म च गदा० 'कर्मधारयः', गदावल्लरीगुपिलजन्म एव कान्तारं गदा० 'कर्मधारयः', तस्माद् गदा० । न ईप्सितं अनी० 'नञ्तत्पुरुषः', अनीप्सितं च तद् उपनतं च अनी० 'कर्मधारयः', दिव्याश्च ताः कान्ताश्च दिव्य० 'कर्मधारयः', दिव्यकान्तानां रतं दिव्य० 'तत्पुरुषः', अनीप्सितोपनतं दिव्यकान्तारतं यस्य स अनी० । अनन्तान् (कर्मांशान्) जयतीति अनन्तजित् । अभिमतस्य आयः अभि० 'तत्पुरुषः', अभिमतायं ददातीति अभि० 'उपपद'समासः । समस्तानि च तानि जगन्ति च समस्त० 'कर्मधारयः', समस्तजगतां अंहांसि समस्त० 'तत्पुरुषः', तेषां समस्त० । आपदां ओघः आप० 'तत्पुरुषः', कृतः आपदोघो येन स कृत० 'बहुव्रीहिः', कृतापदोघश्चासौ स्मरश्च कृता० 'कर्मधारयः', हतः कृतापदोघस्मरो येन स हत० 'बहुव्रीहिः' ॥

५४—यान् आनताः यदानताः 'तत्पुरुषः' । वरश्चासौ विधिश्च वर० 'कर्मधारयः', तस्मिन् वर० । अलीकं आनने येषां ते अलीका० 'बहुव्रीहिः' । श्रुतं एव ज्वलनः श्रुत० 'कर्मधारयः', श्रुतज्वलनेन भस्मसात्कृतं श्रुत० 'तत्पुरुषः', भवानां आवली भवा० 'तत्पुरुषः', भवावली एव काननं भवा० 'कर्मधारयः', श्रुतज्वलनभस्मसात्कृतं भवावलीकाननं यैः ते श्रुत० 'बहुव्रीहिः' । बृहन्ति च तानि दुरितानि च बृह० 'कर्मधारयः', जगति बृहद्दुरितानि जग० 'तत्पुरुषः', प्रपञ्चितानि च तानि जगद्बृहद्दुरितानि च प्रपञ्चित० 'कर्मधारयः', प्रपञ्चितजगद्बृहद्दुरितानि एव कूपः प्रपञ्चित० 'कर्मधारयः', प्रपञ्चितजगद्बृहद्दुरितकूपं तरन्तीति प्रपञ्चित० 'उपपद'समासः । न विद्यते उपमा यस्याः सा अनु० 'बहुव्रीहिः',

अनुपमा चासौ रूपता च अनु० 'कर्मधारयः', अनुपमरूपतया राजते इति अनु० 'उपपद'समासः, तेन अनु० ॥

५५—अखिलं च तद् विष्टपं च अखिल० 'कर्मधारयः', अखिलविष्टपे आश्रिता अखिल० 'तत्पुरुषः', अखिलविष्टपाश्रिता चासौ सभा च अखिल० 'कर्मधारयः', अखिलविष्टपाश्रितसभायां जनाः अखिल० 'तत्पुरुषः', अखिलविष्टपाश्रितसभाजनानां असवः अखिल० 'तत्पुरुषः,' तान् अखिल० । अमराश्च योगिनश्च अमर० 'इतरेतरद्वन्द्वः,' तैः अमर० । कृतं सभाजनं यस्याः सा कृत० 'वहुव्रीहिः' । जिनेषु इन्द्राः जिने० 'तत्पुरुषः', जिनेन्द्रैः गदिता जिने० 'तत्पुरुषः' । नयाः आदौ येषां ते नया० 'वहुव्रीहिः', नयादयः एव वसूनि नया० 'कर्मधारयः,' नयादिवसूनि पातीति नया० 'उपपद'समासः । रिपूणां विभेदनं रिपु० 'तत्पुरुषः', तस्मिन् रिपु० । शोभनानि च तानि पात्राणि सुपात्राणि 'कर्मधारयः,' सुपात्राणां गीर्वाणता सुपात्र० 'तत्पुरुषः' कृता सुपात्रगीर्वाणता यया सा कृत० 'वहुव्रीहिः' ॥

५६—निजं च तद् अङ्गं च निजा० 'कर्मधारयः', निजाङ्गं एव लता निजा० 'तत्पुरुषः', तया निजा० । विशदश्चासौ वन्धुजीवश्च विशद० 'कर्मधारयः', विशदवन्धुजीवस्येव आभा यस्याः सा विशद० 'वहुव्रीहिः', तया विशद० । सितं अङ्गं यस्य स सिता० 'वहुव्रीहिः', सिताङ्गो विहगो यस्याः सा सिता० 'वहुव्रीहिः' । न नमन्तः अनमन्तः 'नञ्तत्पुरुषः', अनमन्तश्च ते अवन्धुजीवाश्च अनम० 'कर्मधारयः', हताः अनमदवन्धुजीवाः यया सा हता० 'वहुव्रीहिः' । न विद्यते भयं यस्याः सा अभया 'वहुव्रीहिः' । ज्वलन् चासौ ज्वलनश्च ज्वल० 'कर्मधारयः', ज्वलज्ज्वलन एव हेतिः यस्याः सा ज्वल० 'वहुव्रीहिः' । तापं ददातीति ताप० 'उपपद'समासः, तं ताप० । शुभश्चासौ अतिशयश्च शुभा० 'कर्मधारयः', शुभातिशय एव धान्यं शुभा० 'तत्पुरुषः', शुभातिशयधान्यस्य वृद्धिः शुभा० 'तत्पुरुषः', न विद्यते उपमानं यस्याः सा अनु० 'वहुव्रीहिः', अनुपमाना चासौ सीता च अनु० 'कर्मधारयः', शुभातिशयधान्यवृद्धौ अनुपमानसीता शुभा० 'तत्पुरुषः' ॥

५७—समवसरणस्य भूमिः सम० 'तत्पुरुषः', तस्यां सम० । अर्चायाः उदयः अर्चो० 'तत्पुरुषः', सज्जितः अर्चोदयो यस्यां सा सज्जि० 'वहुव्रीहिः', तस्यां सज्जि० । सता जिता सज्जिता 'तत्पुरुषः', सज्जिता अर्चा यस्य स० सज्जि० 'वहुव्रीहिः' । उद्यद् रागो यस्मिन् स उद्य० 'वहुव्रीहिः', उद्यद्रागश्चासौ सौधर्मश्च उद्य० 'कर्मधारयः', उद्यद्रागसौधर्मस्य नामः उद्य० 'तत्पुरुषः', उद्यद्रागसौधर्मनामेन अर्चितः उद्य० 'तत्पुरुषः', उद्यद्रागसौधर्मनामार्चितश्चासौ हरिश्च उद्य० 'कर्मधारयः', उद्यद्रागसौधर्मनामार्चितहरेः परिपूज्यः उद्य० 'तत्पुरुषः' ॥

५८—येषां उदयः यदु० 'तत्पुरुषः', तं यदु० । विगता आपद् यस्मात् तत् व्या० 'वहुव्रीहिः' । उपरता हिंसा यस्मात् तत् उप० । उरुश्चासौ श्रीश्च उरु० 'कर्मधारयः',

